# महापुराणम्

१. ब्रह्ममहापुराणम्
२. पद्ममहापुराणम्
३. विष्णुमहापुराणम्
४. शिवमहापुराणम्
५. भागवतमहापुराणम्
६. नारदीयमहापुराणम्
७. मार्कण्डेयमहापुराणम्
८. अग्निमहापुराणम्
९. भविष्यमहापुराणम्
१०. ब्रह्मवैवर्तमहापुराणम्
११. लिंगमहापुराणम्
१२. वाराहमहापुराणम्
१३. स्कन्दमहापुराणम्
१४. वामनमहापुराणम्
१५. कूर्ममहापुराणम्
१६. मत्स्यमहापुराणम्
१७. गरुडमहापुराणम्
१८. ब्रह्माण्डमहापुराणम्
१९. वायुमहापुराणम्
२०. विष्णुधर्मोत्तर पुराण

वासुकी पुराण :: देवीभागवत

हरिवंश पुराण :: भृंगीशपुराण

एकाम्रपुराण

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीविष्णुधर्मोत्तरपुराणम्

# THE VISNUDHARMOTTARAPURĀNAM

देहलीस्थेन प्रो० डा० चारुदेवशास्त्रिणा प्रणीतया भूमिकया सनाथितम्
नागशरणसिंह सम्पादितश्लोकानुक्रमण्या च सहितम्

तत्रायं प्रथमो भागः




NAG PUBLISHERS

11 A/U.A (POST OFFICE BUILDING) JAWAHARNAGAR, DELHI-7

(This publication has been brought out with the financial assistance from the Government of India, Ministry of Education and Culture)



1. 11A/U.A. (Post Office Bldg.) JAWAHARNAGAR, DELHI-7
2. 8A/U.A. 3, JAWAHARNAGAR, DELHI-110007
3. JALALPURMAFI (Chunar, Mirzapur), U.P.

1985

PRICE : Rs. 500-00

(PRINTED IN INDIA)

Published by Nag Sharan Singh for Nag Publishers, Jawahar Nagar, Delhi-7
Text printed at Gian Offset Printers, 308/2, Shahzada Bagh, Dayabasti Delhi-35

ओं नमः परमात्मने ।

नमः सत्यवतीसुताय सहशिष्याय भगवते कृष्णद्वैपायनाय व्यासाय ।

पाद्मे च नारदीये च भक्तृते भूमिके शुभे ।
निशाम्य प्राहुषन्प्रज्ञा मां च तेनोदहर्षयन् ॥ १ ॥
अभीष्टोऽहं यथान्यायं प्रकुर्वे भूमिकां नवाम् ।
विष्णुधर्म्मोत्तरे नाम पुराणे च मिताक्षराम् ॥ २ ॥
अमाधिक्यमनिच्छन्तः संक्षेपं नित्यमिच्छवः ।
इह क्षिप्रं विमोत्स्यन्ते ह्यर्थजातं बुभुत्सितम् ॥ ३ ॥
इह चोद्भावितं काव्यं क्वचित्कोणे व्यवस्थितम् ।
सारवत्यः सुधाप्रख्याः सङ्गृहीताश्च सूक्तयः ॥ ४ ॥
चार्वीं शैलीं समाश्रित्य निर्मितं कविवेधसा ।
पुराणं खल्विदं लोक्यं कस्य नावर्जयेन्मनः ॥ ५ ॥

इह खण्डत्रितयात्मके पुराणे यो विषयानुक्रमो मूलकारेणास्थितः स एवस्माभिरत्रतिग्रहे समाश्रितः, तद्धानौ बीजाभावात् । मूले न्यस्तानां विषयाणामितरेतरासंसर्गः स्थितो नानुबन्धः । सोऽत्र संक्षेपेऽप्यनुभाविष्यते पठकैरिति न नो विस्मयाय न च खेदाय ।

# भूमिका

## भूरादयः सप्त लोकाः

भूर्लोकः प्रथमो राजञ्शृणुष्व गदतो मम । पातालेन तु तत्तुल्य-मूर्ध्वंतः परिकीर्तितः (१।५।१) ।। वायुस्कन्धा विनिर्दिष्टास्ते तु सप्त महात्मभिः । एकैकं नियुतः पञ्च योजनानां प्रकीर्तितम् (२) । पशवः पक्षिणः कीटा मनुष्याः किंनरास्तथा । यक्षराक्षसगन्धर्वाः पिशाचा भूमिगोचराः (३) ।। सर्वं एते विनिर्दिष्टा अन्नादा भूमिगोचराः । विद्याधराणां प्रथमं वायुमार्गः प्रकीर्तितः (४) ।। द्वितीयः सिद्धविद्यानां तृतीयस्तु गरुत्मताम् । चतुर्थो वायुमार्गस्तु गन्धर्वाणां प्रकीर्तितः (५) ।। विनायका पञ्चमगाः षष्ठे च करिणां गणाः । येषां शीकरतोयेन चावश्यायः प्रकीर्तितः (६) ।। सप्तमे च महाभागाः सिद्धास्तिष्ठन्ति यादव । तस्योपरिष्टादपरस्तावदेव प्रमाणतः (७) ।। भुवर्लोक इति ख्यातो यत्र तिष्ठन्ति देवताः । मन्वन्तराधिकारेषु ये भविष्या महीपते (८) ।। तस्योपरिष्टादपरस्तावदेव प्रमाणतः । स्वर्लोको वसति यत्र प्रायशः पुण्यकर्मणाम् (९) ।। सोमपानां च देवानां शक्रादीनां महीपते । महर्लोकस्थितिर्यत्र देवतानां महात्मनाम् (१०) ।। विनिवृत्ताधिकाराणां सिद्धानां नृपसत्तम । तस्योपरिष्टादपरस्तावदेव प्रमाणतः (११) ।। जनलोकः स्थितिर्यत्र गवां पार्थिवसत्तम । तिष्ठन्ति ब्रह्मणो रात्र्यां यत्र जीवाः समन्ततः (१२) ।। तस्योपरिष्टादपरस्तावदेव प्रमाणतः । तपोलोकः स्थितिर्यत्र प्राणेशानां महात्मनाम् (१३) । तस्योपरिष्टादपरस्तावदेव प्रमाणतः । सत्यलोकः स्थितिर्यत्र ब्रह्मणः परमेष्ठिनः (१४) ।। इत्येते कथिताः सप्त तव लोका महात्मनाम् (१५) ।

## वेदोत्पत्तिः

ब्रह्मणो वेदोत्पत्तिरिति सर्वस्य पौराणिकस्य प्रतीतम् । ब्रह्मा च चतुर्वदनः । कतमस्मात्कस्य वेदस्य जनिरजनीति विशिष्योच्यतेऽत्र पुराणे । तद्यथा—पूर्वात्ते वदनाज्जातमृग्वेदममृतप्रभम् । दक्षिणाद्वदनाज्जातं यजुर्वेदं तथैव च (१।२७।१५) ।। पश्चिमाद्वदनाज्जातं सामवेदं तथा तव । उत्तराद्वदनाज्जातमथर्वाङ्गिरसं शुभम् (१६) ।।

## सगरोपाख्यानम्

इह पुराणे प्रथमे खण्डे सप्तदशाष्टादशयोरध्याययोः सगरोपाख्यानं स्थितम् । तदिह संगृह्यते प्रसन्नेन स्वेन सन्दर्भेण पुरावृत्तप्रतिपत्तये युक्तायुक्तविमृष्टये च—ऐक्ष्वाकस्य हरिश्चन्द्रस्यान्ववाये बाहुर्नाम राजा बभूव । तस्य च पानस्त्रीमृगयाक्षेषु प्रसक्तस्य हैहयैस्तालजङ्घैश्च म्लेच्छगणसंयुतै राज्यं छलेनापजह्रे । अपहृतराज्यः स वनं प्रपेदे । सपत्न्या दत्तगरा

गुर्विणी तस्य भार्या तेन समं वनं ययौ। वनस्था साऽन्वर्थनामानं सुतं सुषुवे। स च च्यवनर्षिणा सर्वैः संस्कारैः संस्कृतो धनुर्वेदे शस्त्रग्रामे च विनीतः परं कौशलमाप। वयः स्थः पदाजिर्बद्धनिस्त्रिंशः स च्यवनप्रसादतो हैहयांस्तालजङ्घांश्च विक्रान्तवत् सङ्ग्रामयमाणो निजघान, अयोध्यां सम्प्राप्याकण्टकं राज्यं च शशास। च्यवनं च भूयो भूयो मानयामास। च्यवनेनाभ्यनुज्ञातो दारसङ्ग्रहं च चकार। द्वे अस्य भार्ये बभूवतुः। ताभ्यां समेतः स राजा पुत्रार्थं तपस्तेपे हरं च समाराध्य ततो वरमनुत्तमं लेभे—एकं पुत्रमेका जनयिष्यति। षष्टिं च पुत्रसहस्राणि द्वितीया जनयिष्यति इति। इत्थं लब्धवरः स नृपवरः पुत्रं च पुत्रांश्च जनयामास वीर्यवान्। नाम्ना कर्मणा च प्रथमोऽस्य सुतोऽसमञ्जसो जज्ञे, पौराणामहिते च निरतं तं राज्यान्निरवासयत्। तस्य पुत्रोंऽशुमान् पितामहे दृढाभक्तिः सर्वैः समुदितो गुणैस्तं प्रकामं पर्यतोषयत्। निरस्तसमस्तोपसर्गः शमितारिवर्गः स्वस्थः स सर्वामिलां विधिवच्छशास। अस्य षष्टिः सहस्राणि पुत्रास्तु दैवाद् देवब्राह्मणकण्टका जज्ञिरे। तैर्विप्रकृतास्त्रिदशा ब्रह्माणं पितामहं शरणं प्रपेदिरे। स च तान्सान्त्वमुवाद—मा स्मोद्वेगं यात। भगवतो वासुदेवादनन्यः कपिलो महर्षिस्तान्संहतान्निहनिष्यतीति। इत्थं सान्त्वितास्तेऽदितिनन्दनाः प्रमनीभूय त्रिविष्टपं ययुः। अत्रान्तरे सगरो हयमेधेन यियक्षुर्यज्ञियं तुरङ्गमं स्वैः पुत्रैश्चारयामास, यं कपिलो जहार, न च ते विदामासुस्तेनासौ हृत इति। तं विचिन्वानास्ते सर्वां भुवं बभ्रमुरश्वं च न क्वचिदधिजग्मुः, ततस्ते भुवस्तलं खनितुमारेभिरे। खानं खानं ते पातालमवापुः, तुरङ्गमं च कपिलसदेशे स्थितं ददृशुः, अमर्षं गताः कुद्दाललेपिकाहस्तास्तं हन्तुमुद्येमिरे। तद् दृष्ट्वा स ऋषिस्तान्सर्वान्दृक्पातमात्रेणैकपदे भस्मसाच्चकार, निरयं च तान्गमयामास। नारदात्तनयान्नष्टान् विज्ञाय सगरोंऽशुमन्तं पौत्रं प्रेषयामास रुषितः कपिलो महर्षिरुपदृश्यतामनुनीयतामिति चादिदेश। तथादिष्टोंऽशुमान्मुनिमुपेयाय प्रणिपत्य च तुष्टाव। स च स्तवेन मृदूभूतः शान्तसंरम्भस्तस्मै तुरङ्गमं प्रतिददौ प्राह च—पौत्रस्ते भगीरथस्तपोमहिम्ना स्वर्णदीं गङ्गां मर्त्यलोकमानाययिष्यति तदद्भिरभिषिक्ते च भस्मचये सागराः स्वर्यास्यन्ति। इदं चातिरिक्तमुवाच—अन्यस्यापि यस्य कस्यचित्प्रेतस्यास्थीनि गङ्गातोये पतिष्यन्ति चेत् सोपि नाकमेष्यतीति॥

इदमिह विवेच्यम्—षष्टिः सहस्राणि सगरपुत्राः पुराणकारेण देवब्राह्मणकण्टका इत्युक्ताः। केन कदाचारेण केन वा क्रौर्येण तेऽमुं व्यपदेशमानर्हुरिति दूरादपि नोपक्षिप्तम्, नैभृत्यं च परमास्थितम्। तत्कस्य हेतोः। जिज्ञासते च जनो हेतुम्। इदं चापरं निर्निबन्धनं व्याहृतम्। निर्द्वन्द्वो गुणातीत आविर्भूत ज्योतिर्मुनिकुञ्जरः कपिलो यं श्रुतिरपि 'ऋषि प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति इत्येवं स्तवीति स केन प्रयुक्तो हयमेधीयमश्वं स्तेनयामास, कथं वा तेनार्थी बभूव। इतरत्र पुराणे महेन्द्रकृतो हयस्यापहारो निगदितः, युज्यते च सः, साम्यसूयस्य परप्रकर्षमसहमानस्य

सुरेन्द्रस्य, युज्यतेतरां कपिलान्तिके संस्थापनं च तस्य, चौरोऽयमिति ते सागरास्तमाक्रोक्ष्यन्ति, स च मिथ्याभिशस्तस्ताञ्छप्स्यतीत्याशासानस्य। अत्र तु पुराणकारेण मान्यो मुनिः खलीकृत इति सर्वमसाम्प्रतं भाति। कथं वा मन्यन्ते सूरयः।

## रेणुकोपाख्यानम्

इह पुराणे प्रथमे खण्डे षट्त्रिंशेऽध्याये रेणुकावृत्तमुपाख्यायते प्रसङ्गात्। अयमत्र तस्य सारः स्वेन गद्येन निगद्यते —वनगतं भर्तारं जमदग्निं नित्यं पर्यचारीद्रेणुकाऽनुव्रता। जमदग्निश्च विनोदार्थं निरन्तरं प्रास्यच्छरान्। प्रास्तान्प्रास्तांस्तानाहार्षीद्रेणुका। कदाचिल्ललाटन्तपे तपति तपने घर्मार्ता सा घनच्छायस्य कुसुमितस्य शाखिनस्तले मुहूर्तं व्यश्रमत् ततः पत्या क्षिप्तामिषुमादाय समार्पिपत्। कालात्ययेनोपेतां तां भृशं प्रत्यक्रुधज्जमदग्निः, भर्त्सयमानश्च तामवोचत्—शनैः क्रीडतोमे भद्रे विघ्नं कृतवत्यसि, न ते मत्तो भीरस्ति, अवज्ञा वा मयि तवास्तीति। सा प्रत्यवोचत्—उष्णातपमसहमानाऽहं क्षणं तरुतले विश्रान्ता, तेन त्वं मां क्षन्तुमर्हसीति। तच्छ्रुत्वा क्रुधा ज्वलञ्जमदग्निः सूर्ये सायकान्प्रासितुमुद्युक्तः। ततो दिवाकरो विप्ररूपमाधाय सहसा तत्रोपस्थितः, नम्रं च व्यजिज्ञपत्—एष मे निसर्गो यदहं दहनात्मकः। तेन न मे क्रोद्धुमर्हसि। अस्यामेव ते जायायां पुत्र इति जनिष्ये। ततः प्रीतो जमदग्निः सूर्यवत्सः सकलं पर्यग्रहीत्। प्रतिनिवृत्ते च सूर्ये रेणुका पुत्रं रामाभिधं सूर्यवर्चसं व्यजायत यस्मिञ्जाते भूतजननी भूतमात्रं च निरवृणुताम्। बाल्यमतिक्रान्तो भृगूद्वहो रामः पितरं नित्यं शुश्रूषते। अथ कदाचित् तस्मिन्वनं गते चित्राङ्गदो नामावनिपो रामाभी रममाणो वनमागमत्। तस्य कमनीयं वपुर्विलोक्य रेणुकाऽऽत्मनोऽनीशा सती तं मनसाऽगाद् ब्राह्मणतेजसा चाभ्रशत्। भ्रष्टतेजसं तां निभाल्य जमदग्निः सहसा रोषमाविक्षत् पुत्रांश्च न्यगादीत्—निहत पापामिमां जननीं स्विकाम्। ते तु मातुर्गौरवं विचिन्त्य पितुर्वच नाकुर्वन्। पित्रा तिर्यक् सधर्म्माणो भ्रष्टसंज्ञाश्च भवतेत्याक्रुष्टाः। अत्रान्तरे इध्मभारमुपादाय वनादुपावृत्तः पितू रतिकरो रामः। पिता च तं प्राचोदयज्जहीमां मातरं क्षुद्रां राम मा च चिरं कृथाः। एवमनुशिष्टो रामः समनन्तरं शितधारेण परश्वधेन मातुः शिरः कायादपाहरत्। ततः परितुष्टः पिता तमाशिषाऽऽशास्त—स्वच्छन्दमरणं पुत्र ते भविष्यति। यावच्च वैष्णवं तेजस्त्वयि तिष्ठति तावदेव न ते युद्धे कश्चिज्जेता भविष्यतीति। अपरमपि वरं वृणीष्व यमिच्छसीति प्रयुक्तो रामः प्राह—अम्बा मे यथा पुनर्जीवति तथा कुरु, भ्रातरश्च मे यथा प्रतिलब्धसंज्ञा भवन्ति तथाऽनुगृह्णाण माम्। इममेव वरं दीयमानमिच्छामि, नान्यं वरमभोच्छामीति। एवमस्त्विति समुदाहरदुदारं वचो वत्सलः पिता।

चलचित्ता रूपप्रिया रेणुका यथेतरा योषितः, कठिनहृदयोऽसमीक्ष्य-

कारी परशुरामो भ्रातृषु स्निग्धः, तद्भ्रातरश्च विवेकाढ्या इति प्रकृतोपाख्यानस्य पिण्डीभूतोऽर्थः ।।

## दानवैः समं युद्धे रामस्य भार्गवस्याकारवर्णनम् ।

वह्निज्वालाग्रवर्णेन जटाजूटेन राजितम् । गगनार्धमिवारूढं निदाघे रविमण्डलम् (१।४७।१) ।। आधारं सर्वदेवानां तपसा द्योतितप्रभम् । सेवमानमवसनं पीतगात्रमरिन्दमम् (२) ।। एकमेकाकिनं वीरं सहस्रशतमण्डितम् । पिण्डितं सकलं धाम ब्रह्मक्षत्रियतेजसाम् (३) ।। कृष्णाजिनोत्तरासङ्गभ्राजमानं बलोद्धृतम् । स्निग्धया रञ्जितमिव प्रायेण पार्वतोदृशा (४) ।। विराजमानं दोर्दण्डरुक्मदण्डेन भास्वता । परश्वधेन तीक्ष्णेन विमलाकाशवर्चसा (५) ।। तपस्विनमनाधृष्यं यमकालान्तकोपमम् । कम्पयानं पदन्यासै र्वसुधां सकलां तथा (६) ।। मुष्णन्तं सर्वतेजांसि प्रभाते रविमण्डलम् । प्रांशुं कनकवर्णाङ्गं सितयज्ञोपवीतिनम् (७) ।। गङ्गायाः प्रवाहेणेव मेरुश्रृङ्गं विराजितम् । तेजसा दहनाकारं प्रजासंहारकारकम् (८) ।। विषमं प्रथमेशस्य तृतीयमिव लोचनम् । अप्रसह्यमनावार्यं दुर्लङ्घ्यं जीवितच्छिदम् (९) ।। कालेनेव भुजं सव्यं दैत्यहेतोः प्रसारितम् (१०) ।

## रामस्य युद्धे शौटीर्यम्



एवमाद्रवतां तेषां बहूनामाततायिनाम् । जग्राह वेगं सवषां मरुतामिव पर्वतः (१।४७।१२-१३) तीक्ष्णधाराग्रदुष्प्रेक्ष्यकुठारच्छिन्नमस्तकैः । आस्ततार तदा भूमिं कुशैर्वेदिमिवाध्वरे (१।४८।३) ।। ते हन्यमाना रामेण राममेवाभिदुद्रुवुः । परिपूर्णं यथा काले शलभा जातवेदसम् (५) ।। कुञ्जरस्तुरगः पत्तिर्नाजौ यादव दृश्यते । द्वितीयं प्रददौ यस्य प्रहारं भृगुनन्दनः (७) ।। रामेण हन्यमानानां दानवानां मुहु र्मुहुः । आरावः श्रूयते घोरो वनानामिव दह्यताम् (९) ।। विच्छिन्नदन्त्योघशीर्षाणि रणे रामो रथाद्रथम् । व्रजन्भाति विशालाक्षो वृक्षाद् वृक्षमिवाण्डजः (१३) ।। स शराञ्चितसर्वाङ्गः शोणितेन समुक्षितः । रराज रामः समरे रश्मिमामिव भास्करः (१४) ।। हेतिपुञ्जं विधूयोग्रमभ्रपुञ्जं यथा रविः । पुनर्दर्शनमायाति संहर्ता दैत्यतेजसाम् (१८) ।।

## शङ्करकृता देवातिदेवस्य विष्णोः स्तुतिः

भगवद्गीतासु दशमेऽध्याये भगवता वासुदेवेन स्वेन वदनारविन्देन स्वा विभूतयः संशब्दिताः । बहुश्च संवादस्तासां पुराणनिरूपिताभिराभिः । तथा सत्यपि तत्राल्पा उक्ताः, अत्र च भूयस्यः । तत्र विंशत्या पद्यैरुपवर्णना परिणमिता, अत्र च द्विचत्वारिंशतेति परिमाणे महदन्तरम्, तेन पुराणकारस्य कवेः कल्पनाशक्तिर्नापलाप्या भवति, प्रशस्यश्च प्रयासः । सेयमर्थतो स्तुतिरिहाविकलमुद्धिप्यते शब्दतोऽर्थतश्च — न शक्या विस्तराद् वक्तुं देवदेवस्य भूतयः । प्राधान्यतस्ते वक्ष्यामि श्रृणुष्वैकमना द्विज (१।५६।

२) ॥ सर्गे ब्रह्मा स्थितौ विष्णुः संहारे च तथा हरः। वरुणो वायुराकाशो ज्योतिश्च पृथिवी तथा (३) ॥ दिशश्च विदिशश्चापि तथा ये च दिगीश्वराः। आदित्या वसवो रुद्रा भृगवोऽङ्गिरसस्तथा (४) ॥ साध्याश्च मरुतो देवा विश्वेदेवास्तथैव च। अश्विनौ पुरुहूतश्च गन्धर्वाप्सरसां गणाः (५) ॥ पर्वतोदधिपाताला लोका द्वीपाश्च भार्गव। तिर्यगूर्ध्वमधश्चैव त्विङ्गितं यच्च नेङ्गते (६) ॥ सच्चासच्च महाभाग प्रकृतिर्विकृतिश्च यः। कृमिकीटपतङ्गानां वयसां योनयस्तथा (७) ॥ विद्याधरास्तथा यक्षा नागाः सर्पाः सकिन्नराः। राक्षसाश्च पिशाचाश्च पितरः कालसन्धयः (८) ॥ धर्मार्थकाममोक्षाश्च धर्मद्वाराणि यानि च। यज्ञाङ्गानि च सर्वाणि भूतग्रामं चतुर्विधम् (९) ॥ जरायुजाण्डजाश्चैव संस्वेदजमथाद्भिजम्। एकज्योतिः स मरुतां वसूनां स च पावकः (१०) ॥ अहिर्बुध्न्यश्च रुद्राणां नादैवाश्विनयोस्तथा। नारायणश्च साध्यानां भृगूणां च तथा क्रतुः (११) ॥ आदित्यानां तथा विष्णुरायुरङ्गिरसां तथा। विश्वेषां चैव देवानां रोचमानः स कीर्तितः (१२) ॥ वासवः सर्वदेवानां ज्योतिषां च हुताशनः। यमः संयमन-शीलानो विरूपाक्षः क्षमाभृताम् (१३) ॥ यादसां वरुणश्चैव पवनः प्लवतां तथा। धनाध्यक्षश्च यक्षाणां रुद्रो रौद्रस्तथान्तरः (१४) ॥ अनन्तः सर्वनागानां सूर्यस्तेजस्विनां तथा। ग्रहाणां च तथा चन्द्रो नक्षत्राणां च कृत्तिका (१५) ॥ कालः कलयतां श्रेष्ठो युगानां च कृतं युगम्। कल्पं मन्वन्तरेशाश्च मनवश्च चतुर्दश (१६) ॥ स एव देवः सर्वात्मा ये च देवेश्वरास् तथा। संवत्सरस्तु वर्षाणां चायनानां तथोत्तरः (१७) ॥ मार्गशीर्षस्तु मासानामृतूनां कुसुमाकरः। शुक्लपक्षस्तु पक्षाणां तिथीनां पूर्णिमा तिथिः (१८) ॥ कारणानां वधः प्रोक्तो मुहूर्त्तानां तथाभिजित्। पातालानां सुतलश्च समुद्राणां पयोदधिः (१९) ॥ जम्बूद्वीपश्च द्वीपानां लोकानां सत्य उच्यते। मेरुः शिलोच्चयानां च वर्षेष्वपि च भारतम् (२०) ॥ हिमालयः स्थावराणां जाह्नवी सरितां तथा। पुष्करः सर्वतीर्थानां गरुडः पक्षिणां (२१) ॥ गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः। ऋषीणां च भृगुर्देवो देवर्षीणां च नारदः (२२) ॥ तथा ब्रह्मऋषीणाञ्च अङ्गिराः परिकीर्तितः। विद्याधराणां सर्वेषां देवश्चित्राङ्गदस्तथा (२३) ॥ कम्बरः किन्नाराणां च सर्पाणामथ वासुकिः। प्रह्लादः सर्वदैत्यानां रम्भा चाप्सरसां तथा (२४) ॥ उच्चैः श्रवसमश्वानां धेनूनां चैव कामधुक्। ऐरावतो गजेन्द्राणां मृगाणां च मृगाधिपः (२५) ॥ आयुधानां तथा वज्रो नराणां च नराधिपः। क्षमा क्षमावतां देवो बुद्धि बुद्धिमतामपि (२६) ॥ धर्माविरुद्धः कामश्च तथा धर्मभृतां नृणाम्। धर्मो धर्मभृतां देवस्तपश्चैव तपस्विनाम् (२७)। यज्ञानां जपयज्ञश्च सत्यं सत्यवतां तथा। वेदानां सामवेदश्च अंशूनां ज्योतिषां पतिः (२८) ॥ गायत्री सर्वमन्त्राणां वाचः प्रवदतां तथा। अक्षराणामकारश्च यन्त्राणां च तथा धनुः (२९) ॥ अध्यात्मविद्या विद्यानां कवीनामुशना कविः। चेतना सर्वभूतानामिन्द्रियाणां मनस्तथा (३०) ॥ ब्रह्मा ब्रह्मविदां देवो ज्ञान ज्ञानवतां तथा। कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा तथा

क्षमा (३१) ।। आश्रमाणां चतुर्थश्च वर्णानां ब्राह्मणस्तथा । स्कन्दः सेनाप्रणेतॄणां सदयश्च दयावताम् (३२) ।। जयश्च व्यवसायश्च तथोत्साहवतां प्रभुः । अश्वत्थः सर्ववृक्षाणामोषधीनां तथा यवः (३३) ।। मृत्युः स एव म्रियतामुद्भवश्च भविष्यताम् । झषाणां मकरश्चैव द्यूतं छलयतां तथा (३४) ।। मानश्च सर्वगुह्यानां रत्नानां कनकं तथा । धृतिर्भूमौ रसश्चाप्सु तेजश्चैव हुताशने (३५) ।। वायुः स्पर्शगुणानां च खञ्च शब्दगुणं तथा । एवं विभूतिभिः सर्वं व्याप्य तिष्ठति भार्गव (३६) ।। एकांशेन भृगुश्रेष्ठ तस्यांशत्रितयं दिवि । देवाश्च ऋषयश्चैव ब्रह्मा चाहं च भार्गव (३७) ।। चक्षुषा यं न पश्यामो विना ज्ञानगतिं द्विज । ज्ञाता ज्ञेयस्तथा ध्याता ध्येयश्चैको जनार्दनः (३८) ।। यज्ञो यष्टा च गोविन्दः क्षेत्रं क्षेत्रज्ञ एव च । अन्नमन्नाद एवोक्तः स एव च गुणत्रयम् (३९) ।। गामाविश्य च भूतानि धारयत्योजसा विभुः । पुष्णाति चौषधीः सर्वाः सोमो भूत्वा रसात्मकः (४०) ।। प्राणिनां जठरस्थोऽग्निर्भुक्तपाची स भार्गव । चेष्टाकृत् प्राणिनां ब्रह्मन् स च वायुः शरीरगः (४२) ।। यथादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत् तेजस्तत्र कीर्तितम् (४२) ।।

### वेनस्य राज्ञो मतिविपर्ययः

अङ्गस्य वेनः पुत्रस्तु नास्तिको धर्मवर्जितः (१।१०८।१) असच्छास्त्ररतो नित्यं लोकायतिकसत्तमः। चकार लोके मर्यादां धर्मबाह्यां नराधिपः (६) ।। न यष्टव्यं न होतव्यं न देयं धर्मकारणात् । ऋषयस्तं समागम्य कदाचिद् वाक्यमब्रुवन् (७) ।। पूर्वप्रवृत्तां मर्यादां पूर्वैः पूर्वतरैः कृताम् । लोकायतिकवाक्येन न त्वं हन्तुमिहार्हसि (८) ।। वेन उवाच—भवतां किं प्रलापेन वृथैव द्विजपुङ्गवाः (१२) । ये मृतास्ते मृताः सर्वे मृतानां संभवः कुतः । प्राणस्य वायुभूतस्य निष्क्रान्तस्य शरीरतः (१३) ।। भूयः शरीरग्रहणं युक्त्या नैवोपपद्यते । तपांसि हायनाश्चित्राः संयमो भोगवञ्चना (१४) ।। अग्निहोत्रादिकं कर्म बालक्रीडेव लक्ष्यते । ग्राम्याणां मूढचित्तानां स्त्रिणां चैव योषिताम् । (१५) ।। अन्येषां चैव धनिनां धूर्त्तैरादिरसुभिधनम् । शास्त्राण्यनेकरूपाणि ग्रथितानि सहस्रशः (१६) ।। देहि नित्यं यजस्वैवं देवास्तेऽनुग्रहीकृताः । धनमाप्स्यसि शत्रूंश्च विजेष्यसि सुखं च ते (१७) ।। मुग्धा एवं प्रतार्यन्ते धूर्त्तैर्धनजिहीर्षया । यावज्जीवं सुखं जीवेन् नास्ति मृत्योरगोचरम् (१८) ।। भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः । नास्ति दत्तं हुतं चेष्टं न देवा ऋषयो न च (१९) ।। शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा (३०) ।। नाप्नुवन्ति जना विप्राः प्राप्नुवन्ति स्वभावतः (३१) ।। नात्र पूर्वकृतं कर्म धूर्त्तवादो यथा द्विजाः (३२) । पाषाणार्चादिदत्तेन कथं तुष्यन्ति देवताः (३३) । अन्यभुक्तेन चान्यस्य तृप्तिश्चैव कथं भवेत् । अन्यभुक्तेन चान्यस्य यदि तृप्तिर्भविष्यति (३५) ।। दद्यात्प्रवसतः श्राद्धं न स पथ्योदनं महत् (३६) कृपणयज देहीति धनलुब्धैः प्रकीर्तितम् (३७) ।

धनिनां धननाशाय सततं स्वार्थतत्परैः। धर्मे निविष्टाः पुरुषा दृश्यन्ते दुःखजीविनः (३८) ॥ सुखान्विता हि दृश्यन्ते पापकर्मरतास्तथा। तस्माद् धर्मेण किं कार्यं सुखं जीवेत्तु पण्डितः (३९) ॥

## उर्वशीमनोविनोदार्थं रम्भया सख्या क्रीडावनवर्णनम् ।

क्रीडावनवर्णना सेयमुत्तमं काव्यमिति रसिकजनास्वादाय समस्य विन्यस्यते—चारुप्रसूनं पश्येमं सुभगे चम्पकद्रुमम् । त्वद्गात्रवर्णसदृशैः समन्तात्कुसुमैश्चितम् (१।१३२।२) ॥ इमं च दाडिमं पश्य पुष्पितं वामलोचने । योऽयं बिभर्ति कुसुमैस्त्वदीयामधरश्रियम् (३) ॥ पश्य कामशराकारं सहकारं मनोरमम् । यत्र चात्मसमुत्पन्नारूढास्तस्य (?) महात्मनः (४) ॥ श्रियं कपोलयोस्तुभ्यमाददानै र्मनोरमैः । पुष्पैरुपेतं चार्वङ्गि मधूकं पश्य शोभने (५) ॥ त्वत्पयोधरसंकाशैः रम्यैरुपचितं फलैः । पश्य तालद्रुमं सौम्ये मनसः प्रीतिवर्धनम् (६) ॥ स्तम्भैस्त्वदूरुसंकाशैः कदलीं पश्य शोभने । सुवर्णां चारुसर्वाङ्गीं निर्मितां विश्वकर्मणा (७) ॥ पश्यातिमुक्तकलतां कुसुमाढ्यां मनोहराम् । त्वत्केशपाशसंकाशैर्भ्रमरैरुपशोभिताम् (८) ॥ पश्येमं कुन्दविटपं त्वद्दन्तसदृशैः शुभैः । समन्ताच्छोभितं पुष्पै र्विशालाक्षि मनोहरैः (९) ॥ पश्य चोत्पलिनीमेतामुत्पलैरुपशोभिताम् । त्वन्नेत्रसदृशैः फुल्लैर्मनोहृदयनन्दनैः (१०) ॥ नलिनीं सुभगे पश्य कमलैः पुष्पितैर्युताम् । तव निःश्वास गन्धाढ्यैः सौवर्णैर्वज्रकेसरैः (११) ॥ राजहंसानिमान्पश्य नलिनीतीरगोचरान् । गमनं च मनोहारि त्वदीयमिव शिक्षितान् (१२) ॥ त्वत्कराग्रविधान्सौम्ये धारयद्भिश्च पल्लवान् । क्रीडाशैलमिमं पश्य युक्तं बहुभिर्द्रुमैः (१३) ॥ क्रीडाशैले चूतगतः कोकिलः कामवर्धनः । कूजत्ययं मनोहारिस्वनेन सदृशेन ते (१४) ॥ क्रीडाशैले नदीं पश्य निःसृतां शीतलोदकाम् । तुल्यं ते मनसा सौम्ये वहन्तीं निर्मलं जलम् (१५) ॥ त्वां तु कामवशां ज्ञात्वा कृपयेव दिवाकरः । संहृतांशुधरो देवस्त्वस्तमायाति भामिनि (१६) ॥ सन्ध्या कालेन रक्तेन प्रतीचीं पश्य शोभने । आलिङ्ग्यमानां सहसा कामिनेव च कामिनीम् (२०) ॥ अनुयाता रविं सन्ध्या गतमस्तमपि प्रभुम् । साध्वीव वनिता कान्ते कुलजाता मनस्विनी (२२) । व्याप्यमानं सुनासोरु तमसा पश्य भूतलम् । भृङ्गोदरतमालानां तुल्येन वरवर्णिनि (२३) । पश्योदितं च सुभगे सुभगं चन्द्रमण्डलम् । पानमत्तपुरन्ध्रीणां वदनेन समात्विषम् (२६) ॥ कामबाणहतायास्ते सदृशं गण्डयोः श्रिया । बिभर्त्युभयतश्चन्द्रो ज्योत्स्नाजालं समुत्सृजन् (२९) ॥ चन्द्रमस्युदिते पश्य फुल्लां कुमुदिनीं शुभे । त्वदीयहाससंकाशैः कुसुमैरुपशोभिताम् (३१) ॥ विरही चक्रवाकोऽयं रक्तामुत्पलिनीं शुभे । सितामिव सुदुःखार्तो विशत्यायतलोचने (३२) ॥ आलिङ्गिता चन्द्रमसा जहौ रात्रिस्तमः पटम् । कामिनेव विशालाक्षि कामिनी वसनं शुभा (३४) ॥

## पुरूरवःकृता प्रियाया उर्वश्या मार्गणा ।

उग्रसेनेन गन्धर्वेण सासूयं कृते मेषयोरपहारे यावदनावृतकलेवरः शय्योत्थायं तौ मार्गितुं धावति पुरुरवाः तावदुर्वशीमपि कान्तां विनष्टां जानाति। उद्भ्रान्त इव च वने विचरंस्तानि तानि वनसत्त्वानि समापत्त्या दृष्टानि प्रत्येकं पृच्छति प्रियाम्—कच्चिद् दृष्टा त्वया मम प्राणप्रियेति। तत्रास्य करुणालापा द्रावयन्ति वज्रसाराण्यपि हृदयानि किम्पुनः सहजमार्दवानि परार्तिसंवेदनोन्मुखानीति कतिपयेऽत्र समुदाह्रियन्ते—दृष्टा मयेति सा देवी को मां वक्ष्यति कानने। करीन्द्रस्त्वयमस्म्येति तत्कुचाभौ समुद्वहन्। कुम्भौ कठोरौ सुमुखं पृच्छाम्येनं मतङ्गजम्। त्वद्दन्तयुगलप्रख्यं यदूरुयुगलं ह्यभूत् (२८) ।। गतां तां यदि जानीषे कथयस्व ममोर्वशीम्। एष हस्ती गतस्त्रासात् सिंहस्यास्य महात्मनः (२९) ।। अदत्त्वैवोत्तरं मह्यं सिंहं पृच्छाम्यहं वने। मध्यस्त्वद्वुपमस्तस्याः क्व सा सम्प्रति केसरिन् (३०)।। उर्वशी दयिता मह्यं यदि जानासि कथ्यताम्। अदत्त्वैवोत्तरं सिंहः कथमेव गतो मम (३१) ।। दृष्टा कथय हे बिम्ब देवीं बिम्बफलाधराम्। अनेनापि न चाख्याता पृष्टेन सुदती मम (३२) ।। मयूर यदि जानीषे बालां बालमृगेक्षणाम्। उर्वशीं कथयस्वाद्य क्व प्रिया मम वर्तते (३३) ।। अन्तः शरीरे कामाग्निर्बहिर्दहति भास्करः। तापार्ता निःश्वसन्त्येते सिंहा गिरिगुहागताः (३४) ।। गगनं चातकश्चायं तृष्णार्तो लोकते मुहुः। स भृशं तोयपार्थी उर्वश्यर्थे यथा त्वहम् (३६-३७) ।। शिरीष वृक्षो रम्योऽयं मनोहृदयनन्दनः। किन्तु मां पीडयत्येव शिरीषस्तद्विनाकृतम् (४४) ।। निद्रे भजस्व मन्नेत्रे ध्रुवं स्वप्ने वराननाम्। तां तु प्राप्स्याम्यहं सौम्यां मनसः प्रीतिवर्धिनीम् (४९) ।। कथमभ्युदितश्चन्द्रः पीडां जनयते मम। तद्वक्त्रविजितः पूर्वं विकरोत्यधुना मयि (५०) ।।

## पुरूरवस आभिरूप्यम्

उर्वशी कृतपुण्या सा देवी नारायणात्मजा। यया क्रीडितमस्याङ्के वदन्त्येवं च योषितः (१।१३७।९) ।। अयमायात्यसौ राजा यदा शृण्वन्ति योषितः। गृहकार्याण्यपि त्यक्त्वा तदा यान्ति गवाक्षकान् (१०) ।। अभ्राणि शारदानीव बहुचन्द्राणि योषिताम्। मुखै राजन्ति वेश्मानि निर्याति पृथिवीश्वरे (११) ।। या न पश्यति तं यान्तं सा तं ज्ञात्वा तिरोहितम्। मुषितं चैव साऽऽत्मानं वेत्ति निन्दति सा भृशम् (१२) ।। या च पश्यति तं यान्तं कन्दर्पसदृशं नृपम्। तद्गतेन हृदा सापि शून्या तिष्ठति वेश्मनि (१३) ।।

## भरतचारित्रम्

भरतप्रयाणे शक्रपुरोगमाः सुरा इत्थमभिष्टुवन्ति तच्चरितोत्कर्षम्—एष विग्रहवान्धर्म एष सत्यवतां वरः। एष वीर्यवतां श्रेष्ठो

रूपेणाप्रतिमो भुवि (१।२०२।३१) ।। अनेन यत्कृतं कर्म रामे वनमुपागते । न तस्य कर्ता लोकेस्मिन् दिवि वा विद्यते क्वचित् (३२) ।। अनेन राज्यं सन्त्यक्तं गृहं दग्धमिवाग्निना । अनेन दुःखशय्यासु शयितं सुमहात्मना (३३) ।। नित्यमासन्नभोगेन जटावल्कलधारिणा । फलमूलाशिनाऽनेन रामराज्यं हि पालितम् (३४) ।।

युधाजिता मातुलेन गन्धर्वाश्छद्मना युद्धेन नक्तं शक्या जेतुमित्युपदिष्टे भरतः कुलस्य सदृशमुदात्तं वचनमुवाच—राघवाः सत्यसन्धास्तु कूटयुद्धं न शिक्षिताः । तस्मादेषां वधः कार्यः सुयुद्धेन मया नृप (१।२०९।७७) ।।

## केकयराजधानीं प्रविशतो भरतस्य दिदृक्षया प्रणुन्नानां कुलाङ्गनानां ससम्भ्रमाणि चेष्टितानि

गृहकार्याणि सन्त्यज्य ययुर्नार्यो गवाक्षकान् । काश्चिदर्धानुलिप्ताङ्ग्यः काश्चिदेकाञ्जितेक्षणाः (१।२०८।१०) ।। केशैः संयमितैकार्धैः काश्चिदर्धनिवेशितैः । एकस्मिंश्चरणे काश्चिद् गृहीत्वा काष्ठपादुकाः (११) ।। त्वरिताशा ययुर्नार्यो द्वितीये चर्मपादुकाः । तथा पराः समाक्षिप्य पूर्वाक्रान्तगवाक्षकाः (१२) ।। व्रजन्तीषु तथान्यासु काश्चिन्नार्यो गवाक्षकात् । वेगवत्यो ययुः शीघ्रं सन्त्यक्त्वा चर्मपादुकाः (१३) ।। नार्यः स्ववदनैश्चक्रुः सुवक्त्रांस्तान् गवाक्षकान् । अर्धप्रविष्टसत्कम्बुपाणिवारिजकुड्मलाः (१४) ।। द्वितीयपाणिसन्दर्शसमाक्रान्तै ययुः करैः । नीवीबन्धनविश्लेषसमाकुलितचेतनाः (१५) ।। ययुरेवापरास्तत्र पाणिसंश्लिष्टनीवयः । कुसुमप्रकरं काश्चिद् गूहमानाः शिरोगतैः (१६) ।। ययुरेवांशुकैर्दीर्घैस्स्वरमाणा गवाक्षकान् । सितासितेन रामाणां रमणीयेन राघवः (१७) ।। ययौ दृष्टिनिपातेन रज्यमान इवांशुमान् । स चकर्ष तदा तासां पतितैर्नेत्ररश्मिभिः (१८) ।। हृदयानि गृहीत्वेव गच्छमानः स राघवः । स तु दृग्विषये यामां यासां तस्मात्परागतः (१९) ।। न ता बुबुधिरे काञ्चित् क्रियां चित्रगता इव । भरते दूरयातेपि निश्चेष्टाः काश्चिदेव ताः (२०) ।। आकृष्टा ययुः क्षोणीं···(२१) ।

## बन्दिभिः कृताऽऽशीर्वचनसंयुक्ता भरतस्य स्तुतिः

सुप्रभातं समुत्तिष्ठ प्रभाता रजनी शुभा । दिक्प्राची रघुशार्दूल वर्तते ऽरुणाञ्जिता (१।२०९।६) ।। त्वयि सुप्ते जगत्सुप्तं विबुद्धे च सुखान्वितम् । तस्मादुत्तिष्ठ लोकानां शिवाय रघुनन्दन (८) ।। त्वं हि सर्वगुणारामो यथा रामो महीपतिः । गुणैः शशाङ्करश्म्याभैस्त्वया वै रञ्जितं जगत् (९) ।। अत्याश्चर्यं महाबाहो यशसा सुसितेन ते । मुखान्यरातिवृन्दानां क्रियन्ते मलिनानि यत् (१०) ।। अक्षोभ्यश्चातिगम्भीरो भवान्रत्नाकरस् तथा । अग्राह्यत्वात्समुद्रेण न समः प्रतिभाति नः (१२) ।। सौम्यः कलावाल्लक्ष्मीवान्नयनानन्दकारकः । दोषाकरेण क्षयिणा नौपम्यं ते नरा-

धिप (१३) ॥ बाहुभोज्याऽतिविस्तीर्णा सर्वाश्रयवती दृढा । नौपम्यं याति ते सम्यक् क्षोणी त्रिदशेन कम्पिता (१४) ॥ यत्तेस्ति तदवश्यं त्वं ददासि रिपुसूदन । अविद्यमाना भीर्दत्ता भक्ताऽरिगणे कुतः (१५) ॥ निमेषमपि यो दृष्टस् त्वयाऽपाङ्गनिरीक्षणैः । समग्रदृष्ट्याऽयं दृष्टो नित्यमेवेक्षणैः श्रियः (१६) ॥ क्षुरपर्यन्तधारेण चक्रेणारिगणस्य ते । शिरांस्यपहृतान्याजौ देवदेवो जनार्दनः (१७) ॥ कपालमाली खट्वाङ्गी शशाङ्ककृतभूषणः । वामार्धदयिताकारः शङ्करः शं करोतु ते (१८) ॥

## भरतेन सिसङ्ग्रामयिषूणां गन्धर्वाणां समवस्था

गन्धर्वराजपुत्रास्ते क्रोधादश्रुप्रवर्षिणः । रेजुर्युगान्तमेघाभा अचिराभासदृशा (१।२१०।१२) ॥ बभार नमुचिर्वक्त्रं क्रोधरागानुरञ्जितम् । दिक्सौम्येव दिशादाहं महासङ्ग्रामसूचकम् (१३) ॥ कामपालललाटस्था त्रिशिखा भ्रुकुटी बभौ । त्रिभिः प्रपातैर्गङ्गेव निपतन्ती हिमाचलम् (१४) ॥ कृष्णे च शुक्लपर्यन्ते क्रोधरागानुरञ्जिते । कुमुदापीडनेत्रे तु सन्ध्याताम्रे बभूवतुः (१५) ॥ क्रोधाक्रान्तेन वपुषा कुमुदः कुमुदप्रभः । रक्तोत्पलनिभाकारः क्षणन समपद्यत (१६) ॥ चन्द्रापीडमुखं चारु क्रोधधूम्रानुकारितम् । बभार रूपं तन्वभ्रसंभृतस्य निशाभृतः (१७) ॥ क्रोधनिश्वासधूमेन भानोर्वक्त्रमथावृतम् । बभूव भानोः सदृशमुपरागे यदृत्तम (१८) ॥ करनिष्पेषसंजातधूमधूम्रमुखाङ्गकः । अन्वर्थनामतामाप तस्मिन्कालेऽसुदर्शनः (१९) ॥ गवेषणप्रवेगेन वह्निगर्भोज्ज्वलात्मना । ताराभिवर्षणेनैव सूचितो भूपतिक्षयः (२०) ॥ वीरबाहुभुजाघातरत्ननिष्पेषरेणुना । विजृम्भितमथास्थाने क्रोधेनेव वपुष्मता (२१) ॥ भुजाहुबाहुनिष्पेषो बभूवाशनिनिस्वनः । निर्घात इव गम्भीरो राज्ञां निधनसूचकः (२२) ॥ वायुवेग महावेगचरणोल्लिखिता मही । विदद्रे पृथिवीपालविनाशभयशंसिनी (२३) ॥ आयासजातसंस्वेदपुलकोद्गमभूषितम् । सुवर्चा धारयामास ललाटतटपट्टकम् (२४) ॥ प्रस्विन्नगात्रसंक्रान्तकाञ्चनस्तम्भपिङ्गलः । बभूव कुम्भनाभस्तु क्रोधो विग्रहवानिव (२५) ॥ सुविनिःसृतरोमाग्निज्वालाकेसरमालिना । नृसिंहवपुषश्चक्रे रविणाऽनुकृति हरेः (२६) ॥ प्रस्विन्नगात्रसङ्क्रान्तसवगन्धर्वमण्डलः । विश्वरूपधरं मौलः प्रजहास जनार्दनम् (२७) ॥

## समुद्रवर्णनम्

सुमालिमालिभ्यां रक्षोभ्यां कदर्थिता अदितिजाः शेषपर्यङ्कशायिनं भगवन्तं पद्मनाभं साहायकं विबरीषवः समुद्रमुपयन्ति साश्चर्यं च तमुपवर्णयन्ति । सेयमुपवर्णना सत्तमं काव्यमिति रसिकजनास्वादाय समस्य विन्यस्यते—ददृशुश्च रघुश्रेष्ठ समुद्रं पीतमम्भसाम् । ऊर्मिवेगैः प्रनृत्यद्भिर्वल्गन्तमिव वायुना (१।२१४।५) ॥ हसन्तमिव फेनौघैः स्खलन्तं कन्दरासु च । अपारमिव गर्जन्तं नानायादोगणावृतम् (६) ॥ वीचिहस्तैः प्रचलितैराह्वयानमिवामरान् । फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः (७) ॥

ऊर्मयश्चास्य दृश्यन्ते चलन्त इव पर्वताः। तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः (८) ॥ मकराश्चापि दृश्यन्ते जले मग्ना इवाद्रयः। शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः (९) ॥ दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः । क्वचित्सुप्तः क्वचिद् गर्जन् क्वचिद् घूर्णन् क्वचित्स्खलन् (१०) ॥ क्षीबोपमं तं ददृशुः समुद्रं त्रिदशाधिपाः। क्वचिच्चावासितैर्दैत्यैः क्वचिद् दैत्यारिणा तथा (११) ॥ क्वचिच्च भुजगैर्भीमैर्महागाम्भीर्यसंयुतम्। विष्णोर्वराहवपुषा विक्षोभितजलाविलम् (१२) ॥ तेन देवातिदेवेन विष्णुना प्रभविष्णुना (१३) ॥ नित्यमन्तरसंस्थेन निर्मलीकृतविग्रहम् । शक्रवज्रभयग्रस्यमानशैलसमाकुलम् (१४) ॥ विद्रुमाम्बरमाप्लुष्टसदृशाकारविद्रुमम् । पूर्णचन्द्रकलङ्कस्य क्षालनेप्सुरिवोद्धतैः (१५) ॥ खमाक्रामति कल्लोलैः पौर्णमासीषु यः सदा। असङ्ख्यातैस्तरङ्गौघैः संक्रान्तशशिमण्डलम् (१६) ॥ हसन्तं वान्तरिक्षस्य श्रियमेवेन्दुधारिणः। दिग्भागदानकालेषु युक्तं चन्दनवारिणा। सुप्यते च यथा यत्र सततं दानवारिणा (१७) ॥

## देवरक्षसां सम्पराय:

ततः प्रावर्तत रणं खस्थयो र्बलयोस्तयोः (मालिसुमालिनोः) ॥ नानाप्रहरणोदग्रभुजयोर्जयमिच्छतोः (१।२१७।१) ॥ तदा बलाभ्रसंछन्ने गगने खड्गविद्युति। तस्मिन्नेव क्षण जातो भानुम[illegible] विद्युतिः (२) ॥ चलत्खड्गलताविद्युत्समुद्द्योतितविग्रहात् । रक्तवृष्टिः पपातोर्व्यां बलमेघानुविग्रहात् (३) ॥ ततः शोणितवर्षेण सिच्यमाने महीतले। प्रावृष्टिर्महत्यासोच्छादितं भूतलं यया (४) ॥ आसीदगम्या वसुधा शोणितौघपरिप्लुता। रजस्वलेव युवतिस्तदा तत्र नराधिप (५) ॥ स्फुरन्त्याणा विदृश्यन्ते बाहवश्चन्दनोक्षिताः। खड्गप्रहारपतिताः पञ्चशीर्षा इवोरगाः (६) ॥ मुखानि दन्तपूराणि तथा सरुधिराणि च। विरेजुर्दाडिमानीव पाकप्रस्फुरितानि वा (७)। निपतद्भिस्तदा छत्रैश्चामरैर्व्यजनैस्तथा। पात्यमानैः खमभवद् रश्मिपुञ्जविराजितम् (८) ॥ क्षुरप्रविनिकृत्तानि रुधिराक्ते महीतले। लुठन्ति नागहस्तानि भोगिभोगनिभानि च (१०) ॥ अदृष्ट्वा पतितानीह शिरांसि वसुधातले। हत्वा वंशान्खमाजग्मुरन्वेषन्त इवासवः (११) ॥ शरीरे भूतलं प्राप्ता दिवं प्राप्ताः शरीरिभिः। अन्तरिक्षे विनिहिता लोकत्रयजिगीषवः (१२) ॥ छिन्नराक्षसमूर्धानो गलद्रुधिरबिन्दवः। न्यपतन्नुत्तरादेव श्येनैरुपहृताशयात् (१३) ॥ श्येनानां भ्रमतां तत्र राक्षसामिषलिप्सया। बभूव सदृशं रूपं शीर्षाणां भ्रमतां तथा (१४) ॥ निकृत्ताङ्गनिपातेन पतिता बहवस्तदा। सुषुपुर्गां समालिङ्ग्य क्रव्यादा रुधिराविलाः (१५)। निपतन्मत्तमातङ्गप्रस्फुरत्कुम्भनिर्गतैः। मुक्ताफलैर्जहासोर्वी शूरालिङ्गननिवृता, (१६) ॥ हृतकुञ्जरदन्ताग्रविभग्नाङ्गास्तुरङ्गमाः। आसेदुः सुचिरेणोर्वीं नभस्येव गतासवः (१७) ॥ सम्प्राप्तरुधिरां

भूमिं रक्तास्यास्तु निशाचराः। ययुः शरैर्विनिहताः समरे रुधिरप्रियाः (१८) ॥

## रावणवेदवतीसंवादः

बभ्राम वसुधां राजा राक्षसानां प्रतापवान् (१।२२१।१७) ॥ ददर्श स ततः कन्यां तपस्यन्तीं महत्तपः। रूपेणाप्रतिमां लोके यौवने प्रथमे स्थिताम् (१८) ॥ दशग्रीवः स पप्रच्छ तां कन्यां लोकसुन्दरीम्। का त्वं किमर्थं सुश्रोणि चास्थिता यौवने तपः (१९) ॥ श्रुत्वा तस्य तु सा कन्या सत्यं वचनमब्रवीत्। बृहस्पतिसमो विद्वान् पिता मम कुशध्वजः (२०) ॥ वेदाभ्यासप्रवृत्तस्य तस्याहं नृप बान्धवा। सुतापरा समुत्पन्ना तत्पत्न्यां विदिता तथा (२१) ॥ नाम्ना वेदवतीत्येवं ख्याता लोकेषु राक्षस। विष्णोर्मयेयं दातव्या तस्यासीन्मे पितुर्मतिः (२२) ॥ मद्याचनानिरस्तेन दैत्यनाथेन शम्भुना। पिता मम हतो रात्रौ तमालिङ्ग्य विभावसुम् (२३)। प्रविष्टा जनयित्री मे ययाहं विधृता चिरम्। स्वर्गस्थस्य पितुः कामं साहं सत्यमभीप्सती (२४) ॥ आराधयामि तपसा पत्यर्थं मधुसूदनम्। ततस्तामब्रवीद्रक्षो मा त्वं क्लेशे मतिं कृथाः (२५) ॥ भवस्व मे वरारोहे भार्या त्रैलोक्यसुन्दरी। रूपस्य वयसश्चैव नानुरूपं तपस्तव (२६) ॥ त्वां कृत्वोपरतो मन्ये रूपं कृत्वा स विश्वकृत्। न हि रूपोपमा त्वन्या तवास्ति सदृशी यतः(२७) ॥ सम्पूर्णकान्तिमत् सौम्यं वदनं ते वरानने। सकलङ्केन चन्द्रेण कथमौपम्यमर्हति (२८) ॥ भव भूषणजातानां भूषणं त्वं शुचिस्मिते। वृणुष्व मां वरारोहे पतित्वे वरवर्णिनि (२९) ॥ आक्रम्याक्रम्य लोकस्य प्रधाना या मया हृताः। स्त्रियः कुरुष्व सर्वासां तासां स्वाम्यमनिन्दिते (३०) ॥ जटामालाजिनधरी त्वमेवं रतिवर्धिनी। न जाने मण्डनं प्राप्य कथं भीरु भविष्यसि (३१) ॥ रूपेण वयसा लक्ष्म्या तथैव गुणसम्पदा। विक्रमे मे वरारोहे न समो हि जनार्दनः (३२) ॥ जन्म तस्य न जानन्ति परेभ्यो ये परे जनाः। तेन त्वमकुलीनेन किङ्करिष्यसि सुन्दरि (३३) ॥ अनिन्द्रं लोकमिच्छन्ती सुराणां हितकाम्यया। हृता येनानुवृत्तेन योषित्काव्यारणिः पुरा (३४) ॥ पुराणा ये जगत्यस्मिंस्तेभ्यः पूर्वतराश्च ये। तेभ्योऽप्यतिपुराणं तं भर्तारं कथमिच्छसि (३५) ॥ ब्रह्मणो वरदानेन यस्त्ववध्यो दिवौकसाम्। ते दैत्यनाथाः सबलाश्छद्मना तेन घातिताः (३६) ॥ तत्प्रतापनिविष्टेन चेतसा रक्षसां श्रियम्। यो बिभर्त्यपि तां तेन किं करिष्यसि भामिनि (३७) ॥ वृद्धेभ्यो न श्रुतं तस्य त्वया रूपमनिन्दिते। विदितं सर्वलोकानां विश्वरूपवरस्त्वसौ (३८) ॥ शेषाहिभोगपर्यङ्के तेन त्वं शयिता सह। सविषैर्भोगिनिश्वासैः परां ग्लानिमुपैष्यसि (३९) ॥ कण्ठग्रहेण निहतौ येन तौ मधुकैटभौ। कथं कण्ठग्रहं तस्य समुपैष्यसि सुन्दरि (४०) ॥ हिरण्यकशिपुर्येन नखैरुत्क्रान्तजीवितः। कथं रत्यन्तरे तस्य नखाघातं सहिष्यसि (४१) ॥ तस्माद्भावं समुत्सृज्य चारुगात्रि जनार्दने। भजस्व भजमानं मां चिरं प्रीतिमवाप्नुहि (४२) ॥ वेदवत्युवाच—

गुणा एव सुरेशस्य दोषास्ते रजनीचर। जगत्प्रकाशका भानोरुलूकस्येव रश्मयः (४३) ॥ किं त्वया सह वादेन वरणीयः स मे प्रभुः। यादृशस्तादृशो वापि पतित्वे रजनीचर (४४) ॥

## वसन्तवर्णनम्

अयोध्यायामयोध्यायां राजन्दाशरथौ स्थिते। अनतीते कदाचित्तु वसन्ते रतिवर्धने (१।२४०।२) ॥ नात्युष्णशीते ससुखे सर्वप्राणिमनोहरे। उत्फुल्लशाखिसंलीनचारुस्वनशिलीमुखे (३) ॥ कोकिलारावबहुले सप्रवालवनस्पतौ। सुखार्ककिरणे काले विभूषितधरातले (४) ॥ यत्र चूताग्रशाखास्थपरपुष्टनिनादिते। गन्तुकामाः प्रवसिताः पान्था भूयो निवर्तिताः (५) ॥ मञ्जर्यः सहकाराणां यत्र लग्नाः शिलीमुखाः। कामनामाङ्किता बाणाः कामस्येव शरीरिणाम् (६) ॥ कामिन्यः कामिनां कामं यत्र त्याजयता दृढम्। समीरणेन दाक्षिण्यं सर्वत्र प्रकटीकृतम् (७) ॥ मृदुप्रवातसन्नुन्नप्रसूनयवशालिनी। क्ष्वेडपङ्क्तिः सुरुरुचे वहमानेव निम्नगा (८) ॥ आलिङ्गितास्तु मधुना समन्ताद्वनराजयः। फुल्लैः पलाशैः प्रकटं रागं बभ्रुस्तदा स्वयम् (९) ॥ समीरणेन मृदुना पुष्पपत्राचिता मही। रात्रौ व्यभ्रस्य नभसः श्रियमूहे सशाद्वला (१०) ॥ यत्र पुष्पोच्चयं चक्रुः कामिनीपाणिपल्लवाः। पल्लवानां तु सादृश्याद् विज्ञाता नैव कामिभिः (१४) ॥ ऋतुकोकिलसंगीते द्विरेफध्वनिवल्लकीम्। श्रुत्वेव ननृतुर्यत्र मृदुवातहृता लताः (१५) ॥

## ग्रीष्मर्तुवर्णनम्

तस्मिन्व्यतीते तु मधौ नरेन्द्र सन्तापयामास जगत्समग्रम्। निदाघकालो लवणोपमस्तु संरुद्धमार्गोऽतिबृहत्पलाशः (१।२४०।१६) ॥ वर्तमाने तदा ग्रीष्मे विकसन्मल्लिकाकुले। निवृत्तपान्थसंचारे सन्तप्तसिकतोत्करे (१।२४१।१) ॥ प्रफुल्लदाडिमाक्रान्ते ज्वलिताभवनान्तरे। चारुचम्पकपुष्पाढ्यवनराजिविराजिते (२) ॥ पाटलापुष्पसंलीनद्विरेफगणमण्डिते। सन्तप्तमहिषीक्रोडलुठत्पङ्कजभूषणे (३) ॥ पार्वतोत्तुङ्गमातङ्गविलोडितजलाशये। स्वादुगावच (?) सलिले नीहारावृतपर्वते (४) ॥ कर्पूरचन्दनार्द्राङ्ग्यो मृणालवलयाः प्रियाः। रमयन्ति प्रियान्यत्र वनमालाकृतस्रजः (५) ॥ सेव्याश्चन्द्रांशवो यत्र कामिनां कामवर्धनाः। रमणीयप्रदोषाश्च सुतरां यत्र रात्रयः (६) ॥ रात्र्यन्ते शीतलान्वातान् कुसुमाशयगन्धिनः। समाघ्रायाभिजायन्ते कामिनस्तु रिरंसवः (७) ॥ रात्रयः शीघ्रगामिन्यो दिवसा मन्दगामिनः। मिथुनोपगमाद्भानोः संप्रतप्ता भृशं कराः (८) ॥ विलीन हिमतोयौघफेनपुञ्जसमाकुलाः। अत्यर्थशीताः सरितस्तथा हैमेन पर्वताः (९) ॥ तथा बहुलनिर्यासरसुरभीकृतचन्दनैः। वर्धयन्ति तथा कामं कामिनीनां तु कामुकाः (१०) ॥ रत्यन्तरसमुत्पन्नमायासश्रमजं जलम्। कर्पूररजसा यत्र नाशयन्ति स्म कामिनः (११) ॥ यस्मिन्निदाघे सफलाम्रवृक्षे विभूषणाढ्या नृपः वत्सरस्य। दिदृक्षवस्तं रघुवृन्दमुख्यं तदा प्रयाता मनुजास्त्वयोध्याम् (१२) ॥

## वर्षर्तुवर्णनम्

राम उवाच—सम्प्राप्य प्रावृषं वत्स भीमतोयदनिःस्वनाम् । निषिद्धपान्थसंचारां विद्युत्क्षुभिततोयदाम् (१।२४३।१) ॥ मेघैस्तोयभरानम्रैः स्थगितार्कनिशाकराम् । प्रवर्षणजलाघातविकासितसरोरुहाम् (२) ॥ यस्यां घनवरत्रासात् पीनोत्कम्पितपयोधराः । कुर्वन्त्यालिङ्गनं कान्ताः कान्तानां मनसः प्रियम् (३) ॥ भूमिर्नवतृणच्छन्ना शक्रगोपाद्यभूषिता । भीमौघनादविस्तीर्णाः फेनवत्यश्च निम्नगाः (४) ॥ सतोयतोयदाक्रान्तं स्निग्धनीलं नभस्तलम् । बलाकाः शोभयन्ति स्म शारदं तारका इव (५) ॥ धना घनागमारूढा धृतवासवकार्मुकाः । तोयौघबाणधाराभिः प्रववर्षुर्महीतलम् (६) ॥ धाराकदम्बबकुलकुटजार्जुनशोभिताः । पक्वजम्ब्वाम्रशालिन्यो वनराज्यो मनोहराः (७) ॥ निदाघतापसन्तप्ता नवतोयसमुक्षिता । मही विसृजते यस्यां गन्धमाल्यं गुणं स्वकम् (८) ॥ गर्जमानेषु मेघेषु मृदङ्गध्वनिसन्निभम् । यस्यां मयूरा नृत्यन्ति विकसत्सत्कलापिनः (९) ॥ समीरणेन मृदुना नुन्नाः खे च पयोधराः । महिष्यश्च विसर्पन्ति पयःपूर्णपयोधराः (१०) ॥ प्रत्यूषे सञ्चरन्तीनां महिषीणां तदा समम् । घण्टानिनादो मधुरः श्रूयते तृणगह्वरे (११) ॥ स्थलयः कृष्णसारङ्ग नेत्रैरनिमिषैरिव । यस्यां पश्यन्ति शत्रुघ्न जलपूर्णं महीतलम् (१२) ॥ मेघपातेन हृद्येन पृषतोत्करशालिना । कामिन्यः कामिनं सद्यस्त्यजन्ति रघुनन्दन (१३) ॥ अपारगम्याः सरितो राजानो गतविग्रहाः । बलाहकगणच्छन्ना द्यौस्तथैव सविग्रहा (१४) ॥ न निर्वृत्तसुखोद्वाहकाम्याकाम्यक्रिया मही । प्रहृष्टपौरानुगतैः सांवत्सरपुरोहितैः (१५) ॥ व्यग्रा भवन्ति राजानः शक्रयष्टिप्रवेशने ॥ शैलैर्नवतृणच्छन्नैस्तथा नीलाभ्रशेखरैः (१६) ॥ कान्तिमद्भिर्विशेषेण विराजति वसुन्धरा (१७) ।

## शरद्वर्णनम्

राम उवाच—नय त्वं शारदं कालं यावत्सुप्तो जनार्दनः (१।२४४।१) । रमणीयतरा यत्र नद्यः प्रकटसैकताः । सुस्वादुशीतसलिलाः सारसैरुपशोभिताः (२) ॥ बालार्कसदृशैः पद्मैः पद्मिन्यो यत्र भूषिताः । सरसविमलं यत्र तोयं मधुर शीतलम् (३) ॥ वरस्त्रीनयनाकारैश्चारुपत्रविभूषणैः । पश्यन्तीवोत्पलैर्व्योम उत्पलिन्यः सुनिर्मलम् (४) ॥ नभःसरसि विस्तीर्णे तारानुगुणचित्रिते । शोभते च निशीथेषु हंसवद् विचरञ्छशी (५) ॥ आदधानो महच्चापं सन्दधानश्च दृश्यते । यावत्संपूर इत्येव बाणैर्भूमितलं शरत् (६) ॥ जातीकुसुमहृद्यासु बन्धुजीवोज्ज्वलासु च । मनः प्रसादमायाति हृद्यासु वनराजिषु (७) ॥ निम्नगाः काशवसनाश्चक्रवाकयुगस्तनाः । सारसारावहासिन्यः सुतरां रतिवर्धनाः (८) ॥ हंसैः सङ्घट्टनोपेतकह्लाररजसोत्करैः । सरांसि दुर्विभाव्यानि कुशलैरपि मानवैः (१०) ॥

## हेमन्तवर्णनम्

राम उवाच—प्रबुद्धे पुण्डरीकाक्षे हेमन्ते वैष्णवे ऋतौ । कार्यः पुरनिवेशस्ते तथा जनपदस्य वा (१।२४५।१) ।। पक्वनारङ्गसुभगे नीहारावृतनिम्नगे । प्रलूनधान्यकेदारे गततुन्दशिलीमुखे (२) ।। यत्र शीतापदेशेन मानिनोभिरपि स्वयम् । क्रियते त्यक्तमानाभिः प्रियकण्ठग्रहोत्सवः (५) ।। यत्रेक्षुपीडयन्त्राणां यष्टयः पुरुषचोदिताः । भाग्यानीव मनुष्याणामुन्नमन्ति नमन्ति च (८) ।। गृहेषु च सुखोष्णेषु गवां निःश्वासमारुतैः । स्वाध्यायघोषो विप्राणां नृणां यत्र सुखावहः (१०) ।। विचरन्ति नरा यत्र गुरुप्रावरणाम्बराः । कुङ्कुमेनानुलिप्ताङ्गा धनिनः प्रियदर्शिनः (१२) ।। अश्वायामक्षमे काले यत्र यूनां विशेषतः । मृगया दयिता वत्स मन्दरश्मौ दिवाकरे (१३) ।। इक्षवश्च विदार्यश्च तथैव मूलकानि च । रसवन्ति विशेषेण यत्र पिष्टकृतानि च (१५) ।।

## वानराणां कुञ्जराणां चायोधनम्

इह पुराणे प्रथमे खण्डे त्रिपञ्चाशदुत्तरद्विशततमेऽध्याये षड्विंशत्या श्लोकै वानराणां कुञ्जराणां च वैरसमुद्भवो रणो वर्णितः । तेन किं सिषाधयिषति पुराणकारः कविरिति न व्यक्तिमेति । अपार्थकं वाग्विलापनमेतदिति मन्महे । वनद्रुमा हि वानराणां संश्रयास्तांश्च कुञ्जराः पातयन्ति समुन्मूलयन्ति चेति वैरायन्ते वानरास्तेषु, कदनं च तेषां समाचरन्ति । तदिदं प्रलपितमिव भाति । क्व कलभपादाघातसम्पेष्याः शिशुसन्त्रासजनका वराका मर्कटकाः, क्व कण्ठीरवप्रतिस्पर्धिनः कर्कशाः करटिनः । इदं चेहाधिकमाख्यायते—परस्परसंक्षयं दृष्ट्वा कृपयाविष्टो महेन्द्रोऽभ्युपेत्य वारयति दारुणं प्रविदारणम् । वानराः प्रह्वा उपरमन्ते, कुञ्जरास् तूपरतानपि तान्निघ्नन्ति । तेन प्रकुपित आखण्डलः शतपर्वणा दम्भोलिना तेषां पक्षाँल्लुनाति, तथाभूतांस्ताँल्लोमपादायाङ्गराजाय प्रददाति, स च ताञ्शिक्षयित्वा वाहनी करोति । इत्यल्पप्रयोजनं तुच्छमाख्यानम् ।

## भरतेन शैलूषे राजनि हते गन्धर्वनागराणां गन्धर्वीणां च करुणक्रन्दितम्

गन्धर्वपुत्रदाराश्च राजपत्न्यस्तथैव च । रणाजिरं तु सम्प्राप्य रुरुदुर्भृशदुःखिताः (१।२६८।१-२) ।। अहो कृतान्तो बलवान् येन नो बलदर्पिताः (२) ।। अजेयाः सुरसङ्घानां संग्रामे विनिपातिता. । नातिभारोऽस्ति दैवस्य नाशक्यं तस्य विद्यते (३) ।। येन नागायुतप्राणा गन्धर्वतनया हताः । ये पुरा शयनीयेषु पराध्र्येषु मदोत्कटाः (४) ।। न निद्रामभिगच्छन्ति शेरते तेऽद्य भूतले । तालवृन्तानिलैर्ये तु वरस्त्रीभिश्च वीजिताः (५) ।। वीज्यन्ते पतितास्तेऽद्य गृध्रपत्रैर्महीतले । पराध्यंचन्दनाक्ताङ्गा ये विरेजुः समागताः

(६) ।। न राजन्तेऽद्य ते सर्वे शोणिताक्ता महीतले । आलिङ्ग्य सुषुपुः पूर्वं वरोरुजघनाः स्त्रियः (७) ।। ये तेद्य भूमिमालिङ्ग्य दुःखशय्यासु शेरते । हा राजन्देवदर्पघ्न हा राजन् भृत्यवत्सल (८) ।। हा राजन् चारुसर्वाङ्ग हा राजन्सूतवत्सल । बाहुच्छायामुपाश्रित्य वयं कस्य जनेश्वर (९) ।। निर्भया देवदैत्यानां निवत्स्यामो यथासुखम् । सम्पूर्णचन्द्रवदनं पुत्रकोटि-भिरावृतम् (१०) ।। विषमस्थमितो दृष्ट्वा यास्यामो यमसादनम् । सभा-स्थं त्वामपश्यन्तो यास्यामो यमसादनम् (११) ।। एवं जने तु शोकार्ते करुणं विलपत्यथ । गन्धर्वराजपुत्राणां पत्न्यस्ताः सुमनोहराः (१२)। तास्ता दुःखशोकार्त्ताः कारुण्ये महति स्थिताः (१३) । कुणपेषु स्खलन्त्यस्ता बभ्रमुस्तत्र दुःखिताः । उरांसि पाणिभिर्घ्नन्त्यो लूनयन्त्यः शिरोरुहान् (१५) ।। नावाप यासां भवने पुरा सूर्योपि दर्शनम् । दुःखिता मुक्तकेशास्ता जनः सर्वोऽद्य पश्यति (१६) ।। हे भर्तः केन ते बुद्धिर्मरणं प्रति ग्राहिता । हा राजंस्त्वमिमां भूमिं समालिङ्ग्य प्रियामिव (२०) ।। वसुधां प्रिय बाहुभ्यां समाजे किं न लज्जसे । किं शेषे पुरतोऽस्माकं विशेषेण रजस्व-लाम् (२१) ।। खेचरस्यापि ते राजन्सततं वसुधा प्रिया (२२) । राज्ञो न युक्तं शयनं विवृते वसुधातले । तस्मादुत्तिष्ठ राजेन्द्र शयनं भज मा चिरम् (२५) ।। अद्यैव स्मस्त्वया हीना अद्यैव स्पृहयाम ते । अद्यैव स्मरणीयस्त्वं गतोऽसि जनवल्लभ (३३) ।। नूनं कान्ततरः स्वर्गे राजेन्द्र प्रमदाजनः । यत् त्यक्त्वा स्वजनं तस्य रतिर्बद्धा त्वयाऽनघ (३४) ।। वल्लभस्य जनस्यास्य लालितस्य तथा त्वया । दीर्घप्रयाणे कर्तव्यो वाङ्मात्रेणाप्यनुग्रहः (३६) ।। वज्रसारमिदं नूनं हृदयं सुदृढं कृतम् (३८) ।। गतासुमपि दृष्ट्वा त्वां शतधा यन्न दीर्यते (३९) ।

## राजलक्षणाणि

सर्वलक्षणलक्षण्यो विनीतः प्रियदर्शनः । अदीर्घसूत्री धर्मात्मा जित-क्रोधो जितेन्द्रियः (२।३।१) ।। स्थूललक्षो महोत्साहः स्मितपूर्वाभिभाषकः । सुरूपः कुलसम्पन्नः क्षिप्रकारी महाबलः (२) ।। ब्रह्मण्यश्चाविसंवादी दृढभक्तिः प्रियंवदः । अलोलुपः संयतवाग्गम्भीरः प्रियदर्शनः (३) ।। नाति-दण्डो न निर्दण्डश्चारचक्षुरजिह्मगः । व्यवहारे समः प्राप्ते पुत्रस्य रिपुणा सह (४) ।। रथे गजेऽश्वे धनुषि व्यायामे च कृतश्रमः । उपवासतपः-शीलो यज्ञयाजी गुरुप्रियः (५) ।। मन्त्रिसांवत्सराधीनः समरेष्वनिवर्तकः । कालज्ञश्च कृतज्ञश्च नृविशेषज्ञ एव च (६) ।। पूज्यं पूजयिता नित्यं दण्ड्यं दण्डयिता तथा । षाड्गुण्यस्य प्रयोक्ता च शक्त्युपेतस्तथैव च (७) ।। उक्तैरनुक्तैस्तु गुणैरनेकैरलङ्कृतो भूमिपतिश्च कार्यः । सम्भूय राष्ट्र-प्रवरैर्यथावद् राष्ट्रस्य रक्षार्थमदीनसत्त्वः (८) ।। नित्यं राज्ञा तथा भाव्यं

गर्भिणीसहधर्मिणा । यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत् (२।६१।२२) ॥

## राजानुजीविवृत्तम्

इह द्वितोयस्मिन्खण्डे पञ्चविंशेऽध्याये पुष्करो रामाय भार्गवाय राजोपजीविभिर्यथा वर्तितव्यं तथा विस्तरशः सुविशदमुपदिशति । तदद्यापि तथैवोपयोगवद्यथा पुरेति यथामूलं निगद्यते—पुष्कर उवाच—यथानुवर्तितव्यं स्याद् राम राजोपजीविभिः । तथा ते कथयिष्यामि निबोध गदतो मम (२।२५।१) ॥ आज्ञा सर्वात्मना कार्या स्वशक्त्या भृगुनन्दन । आक्षिप्य वचनं तस्य न वक्तव्यं तथा वचः (२) ॥ अनुकूलं प्रियं तस्य वक्तव्यं जनसन्निधौ । रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् (३) ॥ परार्थमपि वक्तव्यं स्वस्थे चेतसि भार्गव । स्वास्थ्यं सुहृद्भिर्वक्तव्यं न स्वयं तु कथं चन (४) ॥ कार्यातिपातकं कार्ये रक्षितव्यं प्रयत्नतः । न च हिंस्यं धनं किञ्चिन्नियुक्तेन च कर्मणि (५) ॥ नोपेक्ष्यं तस्य मानं च तथा राज्ञः प्रियो भवेत् । राज्ञश्च न तथा कार्यं वेशभाषितचेष्टितम् (६) ॥ राजलीला न कर्तव्या तद्द्विष्टं च विवर्जयेत् । राज्ञः समाधिकौ वेशौ न तु कार्यौ विजानता (७) ॥ द्यूतादिषु तथैवास्य कौशलं तु प्रदर्शयेत् । प्रदर्श्य कौशलं चास्य राजानं न विशेषयेत् (८) ॥ अन्तःपुरधनाध्यक्षैर्वैरिद्वृतैर्निराकृतैः । संसर्गं न व्रजेद्राम विना पार्थिवशासनम् (९) ॥ निःस्नेहतां चावमानं तत्प्रयुक्तं च गोपयेत् । यच्च गुह्यं भवेद्राज्ञस्तन्न लोके प्रकाशयेत् (१०) ॥ नृपेण श्रावितं यत्स्याद् गुह्याद् गुह्यं भृगूत्तम । न तत्संश्रावयेँल्लोके तथा राज्ञः प्रियो भवेत् (११) ॥ आज्ञाप्यमाने चान्यस्मिन् समुत्थाय त्वरान्वितः । अहं किं करवाणीति वाच्यो राजा विजानता (१२) ॥ कार्यावस्थां च विज्ञाय कार्यमेतत् तथा भवेत् । सततं क्रियमाणेस्मिँल्लाघवं तु व्रजेद् बुधः (१३) ॥ राज्ञः प्रियाणि वाक्यानि न चात्यर्थं पुनः पुनः । न हास्यशीलश्च भवेन्न चापि भृकुटीमुखः (१४) ॥ नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा । आत्मसम्भावितश्चैव न भवेत्तु कथं चन (१५) ॥ दुष्कृतानि नरेन्द्रस्य न च संकीर्तयेत् क्वचित् । वस्त्रं पत्रमलङ्कारं राज्ञा दत्तं तु धारयेत् (१६) ॥ औदार्येण न तद् देयमन्यस्मिन्भूतिमिच्छता । न चैवाध्यशनं राज्ञः स्वपनं चापि कारयेत् (१७) ॥ नानिर्दिष्टे तथा द्वारे प्रविशेत कथञ्चन । न च पश्येत राजानमयोग्यासु च भूमिषु (१८) ॥ राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्सदा । पुरस्तात्तु यथापश्चादासनं तु विगर्हितम् (१९) ॥ जृम्भां निष्ठीवनं कामं कोपं पर्यङ्किकाश्रयम् । मुकुटं वातमुद्गारं तत्समीपे विवर्जयेत् (२०) ॥ स्वयं तथा न कुर्वीत स्वगुणाख्यापनं बुधः । स्वगुणाख्यापने कुर्यात् परानेव प्रयोजकान् (२१) ॥ हृदयं निर्मलं कृत्वा परां भक्तिमुपाश्रितैः । अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः (२२) ॥ शाठ्यं

लौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रता तथा। चापल्यं च परित्याज्यं नित्यं राजानुजीविना (२३)॥ श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना। राजसेवां ततः कुर्याद्भूतये भीतिवर्धनः (२४)॥ नमस्कार्यास्सदा चास्य पुत्रवल्लभमन्त्रिणः। सचिवैश्चास्य विश्वासं न तु कार्यं कथञ्चन (२५)॥ अपृष्टश्चास्य न ब्रूयात्कामं ब्रूयात्तथापदि। हितं पथ्यं च वचनं हितैः सह सुनिश्चितम् (२६)॥ चित्तं चैवास्य विज्ञेयं नित्यमेवानुजीविना। भर्तुराराधनं कुर्याच्चित्तज्ञो मानवः सुखम् (२७)॥

## द्रुमाणां पालनचिकित्सिते

सायम्प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे। वर्षाकाले भुवः शोषे सेक्तव्यारोपिता द्रुमाः (२।३०।१४-१५)॥ अभ्याशजातास्तरवः संस्पृशन्तः परस्परम्। अव्यक्तमिश्रमूलत्वाद् भवन्ति विफला द्विज (१६-१७)॥ तेषां व्याधिसमुत्पत्तौ शृणु राम चिकित्सितम् (१७)। आदौ संशोधनं तेषां किंचिच्छस्त्रेण कारयेत्। विडङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा (१८)॥ फलनाशे कुलुत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः। शृतशीतपयःसेकः फलपुष्पाय सर्वदा (१९)॥ आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च। गोमांसमुदकं चेति सप्तरात्रं निधापयेत् (२०)॥ उत्सेकं सर्ववृक्षाणां फलपुष्पादिवृद्धिदम्। रङ्गतोयोषितं बीजं रङ्गतोयाभिषेचितम् (२१)॥ उदग्रपुष्पं भवति यौवने नात्र संशयः। मत्स्याम्भसा तु सिक्तेन वृद्धिर्भवति शाखिनाम् (२२)॥

## तत्तद्द्रुमाणां दोहदानि

सन्ति नाम सम्प्रदायागतानि कविभिः समादृतानि पृथग्विधानि द्रुमाणां दोहदानि। येषु राद्धेषु ते पुष्यन्ति च फलन्ति च। तानीह पुराणकारो यथातथं वर्णयति। अत्र च कुतुकी स्याज्जन इति तानीह यथामूलमनुक्रम्यन्ते—ततः प्रधानतो वक्ष्ये द्रुमाणां दोहदान्यहम्। मत्स्योदकेन शीतेन चाम्राणां सेक इष्यते (२।३०।२३)॥ मृद्वीकानां तथा कार्यस्तेनैव रिपुसूदन। पक्वासृग्रुधिरं चैव दाडिमानां प्रशस्यते (२४)॥ तुषं देयं च भव्यनां मद्यं च वकुलद्रुमे। विशेषात् कामिनीवक्त्रसंसर्गात्तु गुणाय यत् (२५)॥ प्रशस्तं चाप्यशोकानां कामिनीपादताडनम्। शृगालमांसतोयं च नारङ्गाक्षोटयोर्हितम् (२६)॥ मधुयष्ट्युदकं चैव बदराणां प्रशस्यते। गन्धोदकं च गोमांसं कतकानां प्रशस्यते (२७)॥ क्षीरसेकेन भवति सप्तपर्णो मनोहरः। मांसपूतो वसामज्जासेकः कुरवके हितः (२८)॥ पूतिमत्स्यघृतं पूतिकर्पासफलमेव च। अरिमेदस्य सेकोयं पाटलेषु च शस्यते (२९)॥ कपित्थबिल्वयोः सेकं गुडतोयेन कारयेत्। जातीनां मल्लिकायाश्च गन्धतोयं परं हितम् (३०)॥ तथा कुब्जकजातीनां कूर्ममांसं प्रशस्यते। खर्जूरनारिकेराणां वंशस्य कदलस्य च (३१)॥ लवणेन सतोयेन सेको वृद्धिकरः

स्मृतः। विडङ्गं तण्डुलोपेतं मत्स्यमांसं भृगूत्तम। सर्वेषामविशेषेण दोहदं परिकल्पयेत् (३२)॥

## ब्राह्मणानां प्राभवत्यम्

अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम्। ब्राह्मणाश्च महाभागा नमस्यास्ते सदैव हि (२।३२।१४)॥ ब्राह्मणानां तथा कार्यं यत्नात् कुर्वीत पार्थिवः। कालातिपातं च तथा विप्रकार्ये न कारयेत् (१५)॥ निष्पोडितस्तूपवसेद्येन विद्वान्निशां जनः। स राम नरकं याति वर्षाणां तु दशायुतम् (१६)॥ ब्राह्मणी रुदती हन्ति कुलं रोदायते ध्रुवम्। तदश्रुवह्निर्दहति कुलं त्रिपुरुषं ध्रुवम् (१७)॥ विद्वानप्यथवाऽविद्वान् ब्राह्मणो मानमर्हति। प्रणीतश्चाप्रणीतश्च यथाग्निर्द्विजपुङ्गव (१८)॥ प्रतिष्ठां प्राप्नुवन्तीह सुरा विप्रप्रतिष्ठिताः (१९)॥ तन्मुखे तथाश्नन्ति देवाश्च पितृभिः सह। वह्नौ हुताच्छ्रेष्ठतमं हुतं विप्रमुखाग्निषु (२०)॥ अस्कन्दमविरुद्धं प्रायश्चित्तैर्विवर्जितम्। यावतो ग्रसते ग्रासान् विद्वान् विप्रः सुसंस्कृतः (२१)॥ अन्नप्रदस्य तावन्तः क्रतवः परिकीर्तिताः। ब्राह्मणानां कराम्मुक्तं तोयं शिरसि धारयेत् (२२)॥ ब्राह्मणस्य करे यस्मात्सर्वतीर्थसमागमः। ब्राह्मणेभ्यः समुत्पन्नं त्रैलोक्यं सचराचरम् (२३)॥ अमोघशापा धर्मज्ञ कथितास्ते जगत्त्रये। आशीर्वादममोघं च ब्राह्मणानां प्रकीर्तितम् (२४)॥ आशीर्वादपराः कार्यास्तस्माद्राज्ञा द्विजोत्तमाः। यैः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः (२५)॥ येषां वचनमात्रेण किम्भूतमधिकं ततः। भोगं राज्यं तथा स्वर्गं येषां वाक्येन लभ्यते (३०)॥

## अनुमरणोपदेशः

आश्चर्यं यद् वेदेऽदृष्टमप्यनुमरणं स्मरतीदम्पुराणम्। पतिव्रतायाः पतिशवेन समं ज्वलिते हिरण्यरेतसि पतनाद्दते गत्यन्तरं नास्तीति स्पष्टाक्षरमुदाहरति पुराणकारः प्रशंसति चेमां क्रियाम्। तद्यथा—मृतं भर्तारमादाय यदि वाथ पतिव्रता। प्रविशेद् द्विजशार्दूल ज्वलितं जातवेदसम्। तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानवे। तावन्त्येव शताब्दानि स्वर्गलोके महीयते (२।३४।४७-४८)॥ व्यालग्राही यथा सर्पं बिलाद् उद्धरते बलात्। एवं भर्तारमादाय सह तेनैव मोदते (४८)॥

## कामदेवपूजाविधानम्

इह पुराणे (३।६५।४७) कामस्यापि विधिवत् पूजनमुपदिष्टम्। न हि कामः सूर्यचन्द्राविव विग्रहवती देवता। देवतात्वं त्वस्य कविभिरारोपितं न वास्तवमिति बालोऽपि वेद। पुरुषार्थचतुष्टये कामो नामैकोऽर्थः, स च धर्माविरोधितया सेव्य इत्यनुशासति शास्त्रकाराः, तं देवतात्वमारोप्य तदभ्यर्चां तु नाभिप्रयन्ति। प्रकृतः कविस्तद्विधानेन किमन्विष्यति। अपार्थो विरसो नीरसो वाऽयं विधिरिति नार्थोऽस्येह विवरणेन॥

## सत्यवता स्वेन प्रविष्टस्य वनस्य वर्णनम्

आसन्नं सत्यवतो निधनं विजानती तत्सहचरिता किमप्युद्विग्ना साध्वी सावित्री वने विचरति, अध्वक्लान्ता सेति मत्वा सत्यवांस्तामाश्वासयति वनशोभासन्दर्शनेन । सेयं काननकामनीयकवर्णना सत्तमं कविकर्मेति सकलेह समुद्ध्रियते—

वने स्मिन्षट्पदाकीर्णं सहकारं मनोहरम् । श्रोत्रघ्राणसुखं पश्य वसन्ते रतिवर्धनम् (२।३७।१) ॥ वने सपुष्पं दृष्ट्वैषा रक्ताशोकं मनोहरम् । हसतीव मनः सेर्ष्यं त्वामिवायतलोचने (२) ॥ दक्षिणे दक्षिणेनैतां पश्य रम्यां वनस्थलीम् । पुष्पितैः किंशुकैर्युक्तां ज्वलितामिव सप्रभैः (३) ॥ सुगन्धिकुसुमामोदी वनराजिविनिर्गतः । करोति वायुर्दाक्षिण्यादावयोः क्लमनाशनम् (४)॥ अप्युत्पलविशालाक्षि कर्णिकारैः सुपुष्पितैः । काञ्चनैरिव भात्येषा वनराजी मनोहरा (५) ॥ अतिमुक्तलताजालरुद्धमार्गवनस्थलीः । पश्योच्चैश्चारुसर्वाङ्गि कुसुमोत्करभूषणाः (६) ॥ मधुमत्तालिझाङ्कारव्याजेन वरवर्णिनि । चापयष्टिं करोतीव कामः पान्थजिघांसया (७) ॥ फुल्लचम्पकसद्वक्त्रा पुंस्कोकिलविनादिनी । विभाति चारुतिलका त्वमिवैषा वनस्थली (८) ॥ कोकिलश्चूतशिखरे मञ्जरीरेणुपिञ्जरः । गदितैर्व्यक्ततामेति कुलीनश्चेष्टितैरिव (९) ॥ पुष्परेणुविलिप्ताङ्गः प्रियामनुसरन्वने । कुसुमात्कुसुमं याति कूजन्कामी शिलीमुखः (१०) ॥ मञ्जरीं सहकारस्य कान्ताचञ्च्वग्रखण्डिताम् । स्वादयत्यतिपुष्पेऽपि पुंस्कोकिलयुवा द्रुमे (११) ॥ काकः प्रसूतां वृक्षाग्रे सामिषाग्रेण चञ्चुना । काकीं सम्पाययत्येष पक्षाच्छादितपुत्रकाम् (१२) ॥ भूभागं निम्नमासाद्य दयितासहितो युवा । नाहारमपि चादत्ते कामी कामं कपिञ्जलः (१३) ॥ कलविङ्कस्तु विरुतैः सप्रियो विटपे स्थितः । मुहुर् मुहुर्विशालाक्षि उत्कण्ठयति कामिनः (१४) ॥ क्षुद्रशाखां समारूढः शुकोऽयं कान्तया सह । भारेण नमयञ्शाखां करोति सफलामिव (१५) ॥ वनेभपिशितास्वादतृप्तो निद्रामुपागतः । शेते सिंहयुवा कान्ताचरणावरणाननः (१६) ॥ व्याघ्रयोर्मिथुनं पश्य शैलकन्दरसंस्थितम् । ययोर्नेत्रप्रभालोकैर्गुहा भिन्नेव लक्ष्यते (१७) ॥ अयं द्वीपी प्रियां लेढि जिह्वाग्रेण पुनः पुनः । प्रीतिमायाति महतीं लिह्यमानश्च कान्तया (१८) ॥ उत्सङ्गकृतमूर्धानं निद्रापहृतचेतसम् । जन्तूद्धरणातः कान्तं सुखयत्येव वानरी (१९) ॥ भूमौ निपतिता कान्तं मार्जारी दर्शितोदरा । नखैर्दन्तैस्तुदत्येषा न च पीडयते तथा (२०)॥ शशकः शशिका चोभे संसुप्ते पीडिते इमे । सँल्लीनगात्रचरणे कर्णैर्व्यक्तिमुपागते (२१) ॥ स्नातं सरसि पद्माढ्ये वारणं मदमन्थरम् । सम्भावयति तन्वङ्गि मृणालशकलैर्वशा (२२) ॥ कान्तपोत्रसमुत्खातैः कान्ता मार्गानुसारिणी । करोति कवलं मुस्तैर्वराही पोतकानने (२३) ॥ दृढाङ्गसन्धिर्महिषः कर्दमार्द्रतनुर्वने । अनुव्रजति [illegible] प्रियां [illegible]चतुष्ककः (२४) ॥ पश्य चार्वङ्गि सारङ्गं त्वत्कटाक्षनिभं वने । सभार्यं मां तु पश्यन्तं कौतूहलसमन्वितम् (२५) ॥

पश्य पश्चिमपादेन रोही कण्डूयते मुखम् । स्नेहार्द्रभावः कषति भर्ता शृङ्गाग्रकोटिना (२६) ।। दाडिमे चमरीं पश्य सितवालामगच्छतीम् । अन्वास्ते चमरः कामी वीक्षते मां च गर्वितः (२७) ।। आतपे गवयः पश्य निविष्टो भार्यया सह । रोमन्थमास्ये कुर्वाणः काकं ककुदि धारयन् (२८) ।। पश्याजं भार्यया सार्धं न्यस्ताग्रचरणद्वयम् । विपुले बदरीस्कन्धे तच्छदग्रासकाम्यया (२९) ।। हंसं सभार्यं सरसि विचरन्तं सुनिर्मले । सुशुक्लस्येन्दुबिम्बस्य पश्यैनं सदृशश्रियम् (३०) ।। सभार्यश्चक्रवाकोऽयं कमलाकरमध्यगः । करोति पद्मिनीं कान्तां सपुष्पामिव सुन्दरि (३१) ।।

## पुण्यकर्मविपाकः

ब्रह्मेन्द्रोपेन्द्रशर्वेन्द्र यमार्काग्न्यनिलाम्भसाम् । वस्वश्विधनदाद्यानां ये लोकाः सर्वकामदाः । धर्मेण तानवाप्नोति पुरुषः पुरुषान्तक (२।३९।८-९) ।। मनोहराणि द्वीपानि वर्षाणि सुमुखानि च (९) । प्रयान्ति धर्मेण नरास्तथैवामरतामिताः । नन्दनादीनि मुख्यानि देवोद्यानानि यानि च (१०) ।। तानि पुण्येन लभ्यन्ते नाकपृष्ठं तथा नरैः । विमानानि विचित्राणि तथैवाप्सरसः शुभाः (११) ।। तैजसानि शरीराणि सदा पुण्यवतां फलम् । राज्यं नृपतिपूजा च कामसिद्धिस्तथेप्सिता (१२) ।। उपस्कराणि मुख्यानि फलं पुण्यस्य दृश्यते रुक्मवैदूर्यदण्डानि चन्द्रांशुसदृशानि च (१३) ।। चामराणि सुराध्यक्ष भवन्ति शुभकर्मणाम् । पूर्णेन्दुमण्डलाभेन रक्तांशुकसितेन च (१४) ।। धार्यतां यान्ति छत्रेण नरः पुण्येन कर्मणा । जयशङ्खस्वना नित्यं सूतमागधनिस्वनाः (१५) ।। वरासनं सभृङ्गारं फलं पुण्यस्य कर्मणः । वरान्नपानं गीतं च नृत्यमाल्यानुलेपनम् (१६) ।। रत्नवस्त्राणि मुख्यानि फलं पुण्यस्य कर्मणः । रूपौदार्यगुणोपेताः स्त्रियश्चातिमनोहराः (१७) ।। वासः प्रासादपृष्ठेषु भवन्ति शुभकर्मणाम् । सुवर्णकिङ्किणीमिश्रचामराः पीठधारिणः (१८) ।। वहन्ति तुरगा देव नरं पुण्येन कर्मणा । हेमकक्षैः समातङ्गैश्चलत्पर्वतसन्निभैः (१९) ।। खेलाङ्घ्रिपदविन्यासैर्यान्ति पुण्येन कर्मणा । सर्वकामप्रदे देवे सर्वापद्दुरितापहे (२०) ।। वहन्ति भक्तिपुरुषास्सदा पुण्येन कर्मणा (२१) ।।

## गवां माहात्म्यम्

गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम् (२।४२।५०) ।। अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वभूतानां रक्षन्ति च वहन्ति च (५१) ।। हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि । ऋषीणामग्निहोत्रेषु गावो होमे प्रयोजिताः (५२) ।। सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् (५३) ।। गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः (५४) ।। ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा स्थितम् । एकत्र मन्त्रा-

स्तिष्ठन्ति हरिरेकत्र तिष्ठति। देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत् (५६) ॥ धार्यते वै सदा तस्मात् सर्वे पूज्यतमाः सदा। यत्र तीर्थे सदा गावः पिबन्ति तृषिता जलम्। उत्तरन्ति यथा येन स्थिता तत्र सरस्वती (५७) ॥ गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथा तद्रजसि प्रवृद्धा। लक्ष्मीः करीषे प्रणतौ च धर्मस्तासां प्रणामं सततं च कुर्यात् (५८) ॥

## धनप्रशंसा

रिपुघातसमर्थः स्याद् वित्तवानेव पार्थिवः। " परचक्रोपमर्देषु वित्तवानेव मुच्यते (२।६१।८) ॥ वित्तवानेव सहति सुदीर्घमपि विग्रहम्। बहुदण्डानपि परांस्तथा भिन्द्याद् धनाधिपः (९) ॥ अन्ने प्राणाः प्रजाः सर्वा धने तच्च प्रतिष्ठितम्। धनवान् धर्ममाप्नोति धनवान् काममश्नुते (१०) ॥ यस्यार्थस्तस्य मित्राणि यस्यार्थः स पुमाँल्लोके यस्यार्थः स च पण्डितः (११) ॥ अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः। विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा (१२) ॥ विशेषो नास्ति लोकेषु पतितस्याधनस्य च। पतितानां न गृह्णन्ति दरिद्रो न प्रयच्छति (१३) ॥ धनहीनस्य भार्यापि नैव स्याद् वशवर्तिनी। गुणौघमपि चैवास्य नैव कश्चित् प्रकाशयेत् (१४) ॥ बान्धवा विनिवर्तन्ते धनहीनात्तथा नरात्। यथा पुष्पफलैर्हीनाच्छकुन्ता द्विज पादपात् (१५) ॥ दारिद्र्यमरणे चोभे केषांचित् सदृशे मते। सत्यं ह्रासाद् (?) दरिद्रस्य मृतः श्रेयान्मतो मम (१६) ॥

## दैवपुरुषकारयोश्चिन्ता

दैवे पुरुषकारे च किं ज्यायस्तद् वदस्व मे। अत्र मे संशयो देव संशयच्छिद् भवांस्तथा (२।६६।१) ॥ पुष्कर उवाच—स्वमेव कर्मदैवाख्यं विद्धि देहान्तरार्जितम्। तस्मात्पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः (२) ॥ प्रतिकूल तथा दैवं पौरुषेण विहन्यते। मङ्गलाचारयुक्तानां नित्यमुत्थानशालिनाम् (३) ॥ येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम। पौरुषेण विना तेषां केषाञ्चिद् दृश्यते फलम् (४) ॥ दैवमेव न जानाति नरः पौरुषवर्जितः। तस्मात्सत्कार्ययुक्तस्य दैवं तु सफलं भवेत् (६) ॥ पौरुषं चैव सम्पत्त्या काले फलति भार्गव। दैवं पुरुषकारश्च कालश्च मनुजोत्तम (७) ॥ त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम्। कृषिवृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः (८) ॥ तास्तु कालेन दृश्यन्ते नैवाकाले कथञ्चन। तस्मात्सदैव कर्तव्यं सधर्मं पौरुषं नृभिः (९) ॥ विपत्तावपि यस्येह परलोके फलं ध्रुवम्। नालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः (१०) ॥ त्यक्तालसान्दैवपरान्मनुष्यानुत्थानयुक्तान्पुरुषान्हि लक्ष्मीः। अन्विष्य यत्नाद् वृणुते द्विजेन्द्र तस्मात्समुत्थानवता हि भाव्यम् (१८) ॥

## कालो दुरतिक्रमः

*नित्यमस्मिन्निरालम्बे काले सततयायिनि ! न तद्भूतं प्रपश्यामि*

स्थितिर्यस्य भवेद्ध्रुवा (२।७८।२) ।। गङ्गायाः सिकताधारास्तथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहाः (३)।। राजर्षयश्च बहवः सर्वे समुदिता गुणैः । देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः (६) ।। ये समर्था जगत्यस्मिन्सृष्टिसंहारकारणे । तेपि कालेन नीयन्ते कालो हि दुरतिक्रमः (७) ।। आक्रम्य सर्वं कालेन परलोकाय नीयते । कर्म पश्यति नो जन्तुस्तत्र का परिदेवना (८) ।। जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । अस्मिन्दुष्परिहार्ये र्थे नास्ति लोके सहायता (९) ।। श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् (२१) ।। क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् । वृकीवारण्यमासाद्य मृत्युरादाय गच्छति (२२) ।। न कालस्य प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते । आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् (२३) ।। नाप्राप्तकालो म्रियते विद्धः शरशतैरपि । कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति (२४) नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः । त्रायन्ते मृत्युनोपेतं जरया वापि मानुषम् (२५) ।।

## शुद्धाशुद्धविनिर्णयः

भूमिष्ठमुदकं शुद्धं तथैव च शिलागतम् । वर्णगन्धरसैर्दुष्टैर्वर्जितं यदि तद् भवेत् (२।७९।१३) ।। शुद्धं नदीगतं तोयं सर्व एव तथाकराः । शुद्धं प्रसारितं पण्यं शुद्धं चाश्वाजयोर्मुखे (१४) ।। मुखवर्जं च गौः शुद्धा मार्जारः श्वा च नो शुचिः । शय्या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः (१५) ।। आत्मनः कथितं शुद्धं न परस्य कथञ्चन । नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् (१६) ।। रतौ प्रस्रवणे वृक्षे मृगयायां तथा शुचि । शुद्धा भर्तुश्चतुर्थेह्नि स्नाता नारी रजस्वला (१७) ।।

## दन्तधावने किं काष्ठं ग्राह्यं किं च वर्ज्यम्

उपस्पृश्य ततः पश्चाद् भक्षयेद् दन्तधावनम् । भुक्त्वा च निक्षिपेद्राम नित्यमेव समाहितः (२।८८।११-१२) ।। मांसं न भक्षयेच्चैव नोर्ध्वशुष्कं न पिच्छिलम् । सुषिरं मधुरं चाम्लं वित्वचं पत्रसंयुतम् (१३) ।। समपूर्वमतिस्थूलं कुब्जकीटविनाशितम् । शाल्मल्यश्वत्थभव्यानां धर्वकिंशुकयोरपि (१४) ।। कोविदारशमीपीलुश्लेष्मातकविभीतकान् । वर्जयेद् दन्तकाष्ठेषु गुग्गुलं क्रमुकं तथा (१५) ।। वटासनार्कखदिर करवीरांश्च भक्षयेत् । जात्यश्वबिल्वबदरं मूलं च ककुभस्य च (१६) ।। अरिमेदं प्रियङ्गुं च कण्टकिन्याश्च भार्गव । प्रक्षाल्य भक्षयेत्पूर्वं प्रक्षाल्यैव च सन्त्यजेत् (१७) ।।

## जीवस्य गर्भे संभवः

जीवः प्रविष्टो गर्भे तु कललं प्रतितिष्ठति । मूढस्तु कलले तस्मिन् मासमात्रं हि तिष्ठति (२।११४।१) ।। द्वितीयं तु तदा मासं घनीभूतः स

तिष्ठति। तस्यावयवनिर्माणं तृतीये मासि जायते (२) ।। त्वक् चर्म पञ्चमे मासि षष्ठे रोम्णां समुद्भवः । सप्तमे च तथा मासि प्रबोधश्चास्य जायते (३) ।। स जीवोपि हि माण्डूकः शेते शीतार्दितोऽम्भसुः । मूढस्तिष्ठति धर्मज्ञ षण्मासान् गर्भगस्तथा (४) ।। मातुराहारपीतं तु सप्तमे मास्युपाश्नुते । अष्टमे नवमे मासि भृशमुद्विजते तदा (५) ।। जरायुर्वेष्टितो देहो मूर्ध्नि बद्धाञ्जलिः सदा । मध्ये क्लीवस्तु वामे स्त्री दक्षिणे पुरुषस्तथा (६) ।। तिष्ठत्युत्तर भागे पृष्ठस्याभिमुखस्तथा । यस्यां तिष्ठति स योनौ तां तु वेत्ति न संशयम् (७) ।। सर्वं स्मरति वृत्तान्तं त्वारभ्य जन्मतस्तथा । अन्धकारे च महति पीडां विन्दति भार्गव (८) ।। कीटगन्धेन महता कल्मषं विन्दते परम् । मात्रा नीते जले पीते परं शीतमुपाश्नुते (९) ।। उष्णे भुक्ते तदा दाहं परमाप्नोति भार्गव । व्याधिभिः परमां पीडां तीव्रां प्राप्नोति दुःसहाम् (१०) ।। व्यायामे च तथा मातुः क्लमं महदुपाश्नुते । व्याधितायां तथा तीव्रां वेदनां समुपाश्नुते (११) ।। भवन्ति व्याधयश्चास्य तत्र घोराः पुनः पुनः । न च माता पिता वेत्ति तदा कश्चित् चिकित्सकः (१२) ।। सौकुमार्याद्रुजं तीव्रां जनयन्ति तु तस्य ताः । आधिभिर्व्याधिभिश्चैव पीड्यमानस्य दारुणैः (१३)।। स्वल्पमध्येऽथ तत्कालं याति वर्षशतोपमम् । सन्तप्यते तथा गर्भे कर्मभिश्च पुरातनैः (१४) ।। मनोरथानि कुरुते सुकृतार्थं पुनः पुनः । जन्म चेदहमाप्स्यामि मानुष्ये दैवयोगतः (१५) ।। ततः कर्म करिष्यामि येन मोक्षो भवेन्मम । नास्ति मोक्षं विना सौख्यं गर्भवासे कथञ्चन (१६) ।। एवं विचिन्तयानस्य तस्य वर्षशतोपमम् (१७) । मासत्रयं तद्भवति गर्भस्थस्य प्रपीड्यतः । ततस्तु काले सम्पूर्णे प्रबलैः सूतिमारुतैः (१८) ।। भवत्यवाङ्मुखो जन्तुः पीडामनुभवन्पराम् । अधोमुखः संकटेन योनिद्वारेण वायुना (१९) ।। निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः । योनिनिष्क्रमणात्पीडां चर्मोत्कर्तनसन्निभाम् (२०)।। प्राप्नोति च ततो जातः तीव्रं शीतमसंशयम् । जन्मज्वराभिभूतस्य विज्ञानं तस्य नश्यति (२१) ।।

## प्राणनिष्क्रान्तिस्थानानि

द्वे नेत्रे च तथा कर्णौ द्वौ तु नासापुटौ तथा । ऊर्ध्वं सप्त छिद्राणि सप्तकं वदनं तथा । एतैः प्राणो विनिर्याति प्रायशः शुभकर्मणाम् (२।११६।४) ।। अधः पायुरुपस्थं च छिद्रद्वयमुदाहृतम् । छिद्रद्वयेन तेनाथ म्रियन्तेऽशुभकारिणः (५) ।। मूर्धानं योगिनां भित्त्वा जीवो व्रजति भार्गव । अथवा स्वेच्छया राम येन चेच्छन्ति योगिनः (६) ।। च्यवन्तं जायमानं वा प्रविशन्तं च योनिषु । पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा (१०) ।। स तु देहपरित्यागकाले तदाऽनघ । तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम् (११) ।।

## के नराः स्वर्गगामिनः

आश्रमेषु यथोक्तेषु वर्तन्ते ये द्विजोत्तमाः । स्वधर्मसक्ताः सततं ते नराः स्वर्गगामिनः (२।११७२) (२) ॥ वर्तन्ते ये महीपाल राजधर्मानुसारतः । पुरोहितमते युक्ता राजानः स्वर्गगामिनः (३) ॥ प्रजासुखे सुखं येषां तद्दुःखे ये च दुःखिताः । दुष्टनिग्रहकर्तारो ज्ञेयास्ते स्वर्गगामिनः (४) ॥ स्वाम्यर्थे ब्राह्मणार्थे वा मित्रकार्ये च ये हताः । गोग्रहे निहता ये च नराः स्वर्गगामिनः (५) ॥ तीर्थयात्रा प्रसक्ताश्च नित्यमध्वनि कर्षिताः । तपसा कर्षिता ये च ते ज्ञेयाः स्वर्गगामिनः (७) ॥ मातापितृपरा दान्ता गुरुभक्ताः प्रियंवदाः । सत्यार्जवरता ये च ते नराः स्वर्गगामिनः (६) ॥ स्वाध्यायसक्ता धीमन्तो गुरुशुश्रूषणे रताः । उपासकाश्च वृद्धानां ते ज्ञेयाः स्वर्गगामिनः (१८) ॥ दरिद्राय च दातारः प्रभवश्च क्षमान्विताः । यौवनस्थाश्च ये शान्तास्ते नराः स्वर्गगामिनः (१६) ॥

## के नरा निरयगामिनः

महापातकिनो ये च ये च पातकिनो जनाः । मांसाशिनो नरा ये च तथा ये गम्यागामिनः । परदाररता ये च ते वै निरयगामिनः (२।११८।१)॥ बहुभार्याश्च भार्यासु वर्तन्ते न समं च ये । ऋतुकालहरा ये च ते वै निरयगामिनः (३) ॥ अयाज्ययाजिनो ये च कूटसाक्ष्यप्रदाश्च ये । तथानृतरता ये च ते वै निरयगामिनः (६) ॥ प्रेक्षमाणे परिजने मिष्टमश्नन्ति ये नराः । असंविभज्य धर्मज्ञ ते वै निरयगामिनः (१०) ॥ वञ्चका भूतकानां च तथैवाश्रितवञ्चकाः । वञ्चकाश्च तथान्येषां ज्ञेया निरयगामिनः (१२) ॥ कृतघ्ना निर्घृणा ये च परस्वादायिनश्च ये । शठाचाराश्च मित्राणां ते वै निरयगामिनः (१३) ॥ धर्मकार्यप्रवृत्तस्य ये नरा विघ्नकारिणः । पापप्रोत्साहकाश्चैव ते वै निरयगामिनः (१५) ॥ बालकातिथिविप्राणां सुराणां चैव मानद । ये च पूर्वभुजो नित्यं ते वै निरयगामिनः (१८) ॥ रजः पश्यन्ति धर्मज्ञ येषां वेश्मनि कन्यकाः । शुल्के च दत्तास्ता यैश्च ते वै निरयगामिनः (२८) ॥ ब्रह्मशकेशवानां च ये नरा भेदवादिनः । तमोभिभूताः परितस्ते वै निरयगामिनः (२६) ॥ नाभिपश्यन्ति ये शक्त्या दीनमातुरमाश्रितम् । आर्तं च नाभिवादन्ति ते वै निरयगामिनः (३२) ॥

## के दुर्गाण्यतितरन्ति

आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः । वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते (२।१२२।७) ॥ वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः । नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते (६) ॥ मातापित्रोश्च ये वृत्ति वर्तन्ते धर्मकोविदाः । वर्जयन्ति दिवास्वापं दुर्गाण्यतितरन्ति ते (१०) ॥ स्वेषु दारेषु वर्तन्ते न्यायवृत्तिमृतावृतौ । अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते (११) ॥ आहवेषु च ये शूरास्त्यक्त्वा मरणजं

भयम् । धर्मेण जयमिच्छन्ति दुर्गाण्यतितरन्ति ते (१२) ।। ये पापानि न कुर्वन्ति कर्मणा मनसा गिरा । निक्षिप्तदण्डा भूतानां दुर्गाण्यतितरन्ति ते (१३) ।। कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः । येषामर्थश्च साध्वर्थो दुर्गाण्यतितरन्ति ते (१४) ।। ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः । विद्यावेदस्नाता दुर्गाण्यतितरन्ति ते (१५)।। येषां न कश्चित् त्रसति त्रस्यन्ति न च कस्यचित् । येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते (१६) ।। परश्रिया न तप्यन्ते सन्तः पुरुषसत्तमाः । ग्राम्यास्वादनिवृत्ताश्च दुर्गाण्यतितरन्ति ते (१७)।। ये क्रोधं नैव कुर्वन्ति क्रोधार्तं शमयन्ति च । न च कुप्यन्ति भृत्यानां दुर्गाण्यतितरन्ति ते (२२) ।। यात्रार्थं भोजनं येषां सन्तानार्थं च मैथुनम् । वाक् सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते (२४) ।। उपवासरता नित्यं नित्यं व्रतपरायणाः । नित्यं संयतचित्ताश्च दुर्गाण्यतितरन्ति ते (३१) ।।

## दुर्निमित्तानि

यान्ति यानान्ययुक्तानि युक्तानि नहि यान्ति चेत् । चोद्यमानानि तस्य स्यान्महद् दुःखमुपस्थितम् (२।१४२।१) ।। प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः । अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः (२।१४३।१) ।। जलं वा स्थलजा यान्ति घोरं वाशन्ति निर्भयाः । राजद्वारे पुरद्वारे शिवाश्चाप्यशिवप्रदाः (२) ।। दिवा रात्रिञ्चरा वापि रात्रौ वापि दिवाचराः । ग्राम्यास्त्यजन्ति ग्रामं वा शून्यतां तस्य निर्दिशेत् (३) ।। प्रदोषे कुक्कुटो वाशेद्धेमन्ते वापि कोकिलः । अर्कोदयेऽर्काभिमुखः श्वा वा नृपभयं भवेत् (५) ।। गृहं कपोतः प्रविशेत् क्रव्यादो मूर्ध्नि लीयते । मधु वा मक्षिका कुर्यान्मृत्युं गृहपते र्वदेत् (६) ।। प्राकारद्वारगेहेषु तोरणापणवीथिषु । केतुच्छत्रायुधाद्येषु क्रव्यात् सन्निपतेद्यदि (७) ।।…स देशो नाशमायाति राजा च म्रियतेऽथवा (८) ।।… दुर्भिक्षवेदिनो ज्ञेयाः काका धान्यमुषो यदि । जनानभिभवन्तश्च निर्भया रणवेदिनः (१२) ।। काको मैथुनसक्तश्च श्वेतश्च यदि दृश्यते । राजा वा म्रियते तत्र स वा देशो विनश्यति (१३) ।। उलूको वाशते यत्र विपतेद्वा तथा गृहे । ज्ञेयो गृहपते र्मृत्युर्धननाशस्तथैव च (१४) ।।

## धर्मयुद्धलक्षणम्

न कर्णी न तथा दिग्धः शरः स्याद् धर्मयोधिनाम् (२।१७७।७१) । नास्थिशल्यः शरः कार्यो दारुशल्यश्च भार्गव । समः समेन योद्धव्यो नापचारो रणे द्विज (७२) ।। सन्नद्धेन च सन्नद्धः साश्वश्चाश्वगतेन च । रथी च रथिना राम पदातिश्च पदातिना (७३) ।। कुञ्जरस्थो गजस्थेन योद्धव्यो भृगुनन्दन । विमुखो भग्नशस्त्रश्च स्त्रीबालपरिरक्षिता (७४) ।। व्यायुधो भग्नगात्रश्च तथैव शरणागतः । परेण युध्यमानश्च युद्धप्रेक्षक एव च (७५) ।। आर्तस्तोयप्रदाता च दण्डपाणिस्तथैव च । एते रणे न हन्तव्याः

क्षत्रधर्ममभीप्सता (७६) ।। दुर्दिने न च युद्धानि कर्तव्यानि महाबल (७८)।

तृतीयखण्डोपक्रमेऽल्पे केचिदध्याया नानाधिकरणाः स्थिताः। तत्र वर्ण्यं लेशतः संस्पृष्टं विस्तरस्तु क्वचिदपि नास्थितः। सुदुस्तरं विस्तरशो हि वक्तुमिति पुराणकारः स्वयमेव तत्र स्वस्यानीशतां प्रख्यापयति। वेदाङ्गनिरूपणायां प्रवृत्तोऽयं प्राथमकल्पिकानां यदुपादेयं भवति तन्मात्रमुपन्यस्यति। केषाञ्चिच्छन्दसामक्षरतो वर्णतश्च भेदमुदित्वा वर्णाक्षरसंख्यानिर्देशेन तत्तत्संज्ञा अनुशिष्य सन्तुष्यति न च लक्ष्यमुदाहरति। व्याकरणे सुबादीर्विभक्तीर्नामादेशमाख्याय तत्तत्प्रयोगविषयमुदाहृत्यालम्बुद्धि र्भवति। अत्र चतुर्थेऽध्याये स्वयम्भूप्रभृतीनां नागापवर्गाणां वक्तॄणां वाक्यानि परीक्षितानि, तेनायं वाक्यपरीक्षाध्याय-इति संज्ञितः। परीक्षायां क्वचिन्नापूर्वं किञ्चिदुक्तम् यथा—आज्ञायुक्तमद्वैधं दीप्तं गम्भीर शब्दवत्। क्वचिन्निरुक्तसंयुक्तं वाक्यमेतत् स्वयम्भुवः (१)।। क्वचित् तथ्यमुक्तम्—प्रत्यक्षाभिहितं यच्च तदृषीणां वचः स्मृतम् इति। आज्ञायुक्तं च वचनं तथा हेतुविवर्जितम्। राजर्षीणां तु विज्ञेयं बह्वर्थं बहुविस्तरम् इति च। देवगन्धर्वदानवादीनां वाक्यलक्षणं कल्पनोत्थमसारं च। तदुपेक्ष्यम्। अत्र पञ्चमेऽध्याये प्रत्यक्षमनुमानमाप्तवचनं चेति प्रमाणत्रितयमभ्युपेतम्। नैयायिकानामभिमतमुपमानं नोरीकृतम्। तत्राप्युद्देश एव कृतो नोपदेशः। इत्थम्भूतो निर्देशः कस्योपकृतये स्यात्? षष्ठे च सर्वस्मिन्नध्यायेऽधिकरणं योगः पदार्थ इत्यादयोऽष्टाविंशतिस्तन्त्रयुक्तयोऽनुक्रान्तास्तल्लक्षणानि चोदाहृतानि, अपेक्ष्यन्ते च तानि सविवरणानि सहलक्ष्याणि। न जातु शक्यानि तानि शुकवत्पाठयितुमित्यल्पप्रयोजनानि। इह सप्तमेऽध्याये प्राकृतभाषालक्षणमपि दशश्लोक्या न्यास्थत्पुराणकारः। तन्न्यासेन प्राकृतस्य कियान् परिचयः कस्य मुग्धस्य भविष्यतीति नातर्कयत। अष्टमे चाभिधानसङ्ग्रहणसमुत्सुकः परिमितानि पर्यायवचनानि समुच्चिनोति तत्तल्लिङ्गे नियताञ्शब्दांश्चाक्रमेणानुक्रम्य कथितकथ्यो भवति।

अथ केन प्रयुक्तोऽयं पुराणकार एतत्प्रवृत्तिरभूत्। सर्वपथीना मे धिषणा कृतावगाहोऽस्य पारे शास्त्रपारावारे इति व्यक्तयामीति चेन्नासौ मनोरथः सिध्यति। गम्भीरवेदित्वस्य बाहुश्रुत्यस्य वा तावताऽप्रसिद्धेः। बालबोधिन्या कृत्या चेह नार्थः। तादृशस्योपदेशस्यान्यत्र सौलभ्यात्। न चैतामन्तरेण पुराणलक्षणप्रहाणिप्रसङ्गः। सर्गः प्रतिसर्गश्चेत्यादि-लक्षणस्य तद्विरहेऽपि तादवस्थ्यात्। अहं तु मन्ये आवापिक एष प्रपञ्चः सुपरिहरो गतानुगतिकतया कृतः।

इदं त्ववश्यमभ्युपेयम्—क्वचिदस्मिन्प्रपञ्चे किञ्चिन्नूतनमप्युपन्यस्तम्। क्वचिच्च तस्मिन् प्रमाणमपि मृग्यम्। अन्यथा च न्यस्तम्। ललाम इति हलार्थे पठितम्, सानन्दमिति मुसलार्थे, तालध्वजीति हलधर

इत्यस्यार्थे, करीषिणीति च विभावरीति च लक्ष्म्यर्थे। अजगवं शाङ्गं धनुरित्युद्दिष्टम्। तद्वितथम्। संस्कृते साहित्ये नैकत्रापि सोर्थो दृष्टः। आभिधानिकाश्चैकस्वर्येणाजगवं पिनाकमाहुः। पिनाकं च शाङ्करं धनुरिति न न विदितम्। दानमिह संवननं प्रोक्तम्। अन्यत्र संवननं वशीकरणमुक्तम्। श्री रामायणेपि दानसंवनना ह्येते ग्रन्था मेधाविभिः कृता इत्यत्र विवेकेन निर्देशः। महर्षयो भूतकृत इत्यनर्थान्तरम्, सप्तर्षयश्चित्रशिखण्डिन इति च। अत्र प्रमाणं मृग्यम्। इन्द्रचापं दीर्घं चेद्रोहितमुच्यते, दण्डाकारं चेद् दण्डोभिधीयत इति नूतने संज्ञे इह कृते।

## प्रहेलिकाभेदाः तल्लक्षणानि च

इह तृतीये खण्डे सर्वोपि षोडशोऽध्यायः प्रहेलिकानिरूपणपरः। अत्र सुदुर्लभोर्थसन्दोहो निखिलेन चतुर्दशभिः सरलसरसैः पद्यैरर्पितः सर्वस्थ संख्यावतो वेद्य इति यथामूलमुदाह्रियते—काव्ये येऽभिहिता दोषाः केश्चित् तेभ्यः प्रहेलिकाः। कर्तव्याश्च तथैवान्यास्तासां वक्ष्यामि लक्षणम् (३।१६।१) ॥ श्लोकेनैकेन वा द्वाभ्यां कर्तव्या तु नरोत्तम। न कर्तव्याश्च ता राजन् बहुश्लोकनिबन्धनाः (२) ॥ यस्यां मात्रावशादर्थो गोप्यते सा समागता। पर्यायवचनाद्यस्यां वन्दिता सा प्रकीर्तिता (३) ॥ वृत्तान्तगोपिका सा या पदैर्व्यवहितै भवेत्। अप्रसिद्धैस्तु पर्यायैर्दुःखिता नाम सा स्मृता (४)॥ कल्पनागोपितार्था तु कथिता परिहासिका। समानरूपतुल्यार्थैः शब्दैरन्यैः प्रकीर्तिता (५) ॥ दुर्बोधाक्षरबन्धा च परुषा नामतः स्मृता। संख्यामात्रसमानत्वात् संख्याताख्या तथोच्यते (६) ॥ अर्थान्तरान् (?) कल्पनया कल्पिता च तथोच्यते। अन्यस्य संज्ञाव्यामोहान्नामान्तरितसंज्ञिता (७) ॥ अर्थव्यामोहतः प्रोक्ता निभृता च महानृप। समानशब्दा कथिता तुल्यशब्दनिबन्धना (८) ॥ अर्थानुलोमदुर्बोधा व्यामूढेति तथोच्यते। गुच्छाख्या कथिता वृत्तेनानाबन्धनिबन्धना (९) ॥ एकोभयवहुच्छन्ने यथार्थपरिगोपिते। सङ्कीर्णा सम्भवोपेता या तदर्थकरी भवेत् (१०)। तदर्थकारी यत्रार्थो ज्ञायतेन्यार्थकामुकः। राजञ्शब्दवशात्सा च कथिता व्यभिचारिणी (११) उक्तैर्थेवृत्तबन्धेन मात्राभिः स्थापिता तथा। नष्टार्था वा च सा प्रोक्ता वृत्तबन्धनिर्दशिता (१२)॥ नष्टाक्षरा तु कथिता विनैकेन तदार्थदा। अन्यार्थदा तथैवोक्ता वर्णभ्रष्टा नरेश्वर (१३) ॥ कालस्य रूपरूपाणां व्याख्यानेन तदार्थदा। बीजमात्रेण लेशाख्या भूमिपाल प्रकीर्तिता (१४) ॥

## क्व देवतायतनप्रतिष्ठा कार्या

दुर्गे प्रतिष्ठा कर्तव्या नगरे च तथा शुभे। नित्यमापणवीथ्यग्र नान्यत्रेति नराधिप(३।९३।२५) ॥ ग्रामे वा यदि वा घोषे नास्ति यत्रापणो नृप। तत्रोद्याने बहिः कार्या ग्राममध्ये न कारयेत् (२६) ॥ नदीतीरेषु कर्तव्या वनेषूपवनेषु च। सरसां चैव तीरेषु गिरीणां शिखरेषु च (२७)। ।

उपत्यकासु रम्यासु गुहासु च विशेषतः। एतेषु यान्ति सान्निध्यं स्थानेषु त्रिदिवौकसः (२८)॥ जलाशयविहीनेषु देशेषु मनुजोत्तम। सान्निध्यं नैव कुर्वन्ति कदाचित् त्रिदिवौकसः (२९)॥ तथा सुरगृहं कार्यं यथा वामे जलाशयः। पुरस्ताद्वा भवेत्तस्य नान्यथा मनुजाधिप (३०)॥

## सर्वगतस्य देवस्यार्चायामावाहनेन किं प्रयोजनम्

आवाहनमथात्रापि क्रियते यज्जगत्पते। नित्यं संनिहितस्यापि सर्वत्र परमेष्ठिनः (३।१०८।१५)॥ केवलं कारणं तत्र मनसस्तुष्टिकारणम् आवाहितो मया देवः स्थाने संनिहितोपि च (१६)॥ आवाहनं स्वतृप्त्यर्थं पुरुषस्य यथा स्थितम्। तथा प्यर्चा महाभाग स्वतुतुष्ट्यर्थं प्रयोजनम् (१७)॥ नित्यतृप्तस्य किं तस्य कार्यं भवति चार्चया (१८)॥ केवलं भक्ततुष्ट्यर्थं स भक्तेभ्यः प्रतीच्छति। योऽसावर्च्यते देवं यत्र देवोऽर्च्यते बुधैः (१९)॥ अभ्यर्च्यते च यैर्भावैः सर्वं तद् विद्धि तन्मयम्। तस्यार्चाकारणं विद्धि कर्तृ प्रीतिप्रयोजनम् (२०)॥ आदौ कृत्वा महाभाग साकारे लक्ष्यबन्धनम् (२६)। ततः समर्थो भवति शून्ये ध्याने नरोत्तम। एवमावाहनं तस्य तथा पूजा च यादव (२७)॥ प्रबुद्धैः क्रियते यत्नादात्मानुग्रहकारणात्। नित्यतृप्तो न तृप्त्यर्थमुपहारं प्रतीच्छति (२८)॥

## दूरक्षाः स्त्रियः

बह्निरत्नं जलं चैव नराणां धृतिहेतवः। घातकाश्च त एवोक्तास्तथा ज्ञेयाश्च योषितः (३।२२४।२३)॥ वृत्तिर्लोके यथा नास्ति वह्न्यन्नसलिलैर्विना। गृहाश्रमस्तथा नास्ति विना स्त्रीभिः कथंचन (२४)॥ तस्मात्ताः प्रज्ञया रक्ष्या नोग्रेण मृदुना न च। स्त्रियो मूलमनर्थानां त्रिवर्गस्य च साधनम् (२५)॥ तासां न गच्छेद्विश्वासं मणिवद् गोपयेतु ताः। गृहकार्योद्यताः कृत्वा रक्ष्यास्ता भूतिमिच्छता (२६)॥

## अरिष्टानि

दृष्टारिष्टस्य भवता देहत्यागः प्रकीर्तितः। तस्मादस्माकमाचक्ष्व त्वरिष्टानि महामते (३।२३८।१)। प्रवृत्तेर्विकृतिर्नृणां बुद्धीन्द्रियशरीरजा। अकस्माद् दृश्यते येषां तेषां मरणमादिशेत् (२)॥ एतत्समासात्कथितं विस्तरोऽयमतः परम्। सूक्ष्मारिष्टाववोधार्थं तथा स्पष्टार्थमेव च (३)॥ न तु कर्मणि यो व्यभ्रे प्रभाकर्म निशाकृतः। छायां चन्द्रार्कयोर्वापि तयोश्च गमनं तथा (४)॥ देवमार्गे प्रभां वह्ने ध्रुवं तारामरुन्धतीम्। पश्यत्यदृष्टामन्यं वा मृत्युः स्यात्तस्य वत्सरात् (५)॥ पदं चासकलं यस्य खण्डं विकृतमेव वा। पांसुकदर्मयोर्दृश्येत् सप्तमे मासि मृत्युभाक् (१०)॥ क्रव्यादाः पक्षिणो यस्य मूर्ध्नि लीयन्ति वै द्विजाः। काकश्येनादयस्तस्य षष्ठे मरणमादिशेत् (११)॥ यस्य गोमयचूर्णाभं शरीरान्मृज्यते रजः। स्वदेहच्छायाविकृतिः पञ्चमे स तु मृत्युभाक् (१२)॥ अनभ्रे विद्युतं दृष्ट्वा चतुर्थे म्रियते ध्रुवम् (१३)। शक्रचापं जले दृष्ट्वा गगने वा

द्विजोत्तमाः। अविद्यमानं धर्मज्ञास्तृतीये म्रियते ध्रुवम् (१४)॥ मासेन विकृता नासा वक्रा च मरणप्रदा (१६)॥ अर्धमासेन दुर्गन्धप्रभवं स्वशरीरतः। परचक्षुषि यश्छायामात्मनस्तु न पश्यति। स पश्यति महाभागा द्वादशाहेन वै यमम् (१७)॥ निर्वाणदीपगन्धं तु यस्तु नाघ्राति मानवः। सप्ताहेन तु धर्मज्ञाः। पश्यत्यर्कसुतं ध्रुवम् (१८)॥ सद्यः स्नातानुलिप्तस्य हृत्पादशिरसां भवेत्। क्षिप्रं संशोषणं तस्य त्र्यहान्मरणमादिशेत् (१९)॥ गण्डयोस्तिलकान् रक्तान् वर्णवैकृतमेव च। अहोरात्रेण मरणं पुरुषस्य समादिशेत् (२०)॥ अङ्गुलिभ्यां तु पिहिते श्रोत्रे तु न शृणोति यः (२)। शब्दं, न पश्येत्तु मुखं निर्मले दर्पणे तथा। पश्येच्च पुरुषान् प्राप्तान् सद्यो मरणमादिशेत् (२)॥ तोयवन्मेदिनीं तोयं मेदिनीमिव पश्यति। प्रतीन्द्रियं निरीक्षेत न वीक्षेत करस्थितम् (२६)॥ पृथिवीमिव चाकाशं चाकाशमिव मेदिनीम्। आकाशमिव चात्मानं पूर्णमिन्दुमथातिथौ (२७)॥

## कृतज्ञता परमो गुणः

आनृशंस्यं परो धर्मो लोकेस्मिन्द्विजसत्तमाः। तस्मादात्मवता भाव्यं कृतज्ञेन नरेण तु (३।२७०।१)॥ ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा। निष्कृति विहिता राजन्कृतघ्ने नास्ति निष्कृतिः (२)॥ नरकान्न विमुच्यन्ते ये कृतघ्ना नराधमाः। आभूतसम्प्लवं घोरा नात्र कार्या विचारणा (३)॥ तिर्यग्यो नौ हि जायन्ते दुःखावासं वसन्ति च। लभन्ते न क्वचित् त्राणं तथा प्राप्ते भये नराः (४)॥ एतावानेव पुरुषः कृतं यस्मिन्न नश्यति। कृतज्ञः स्वर्गमाप्नोति कृतज्ञो विन्दते महत् (५)॥ प्रभुं वा यदि वा भृत्यं विप्रं गुरुमथापि वा। आपन्नं न त्यजेद्यस्तु स तु नाके महीयते (६)॥ समृद्धं यस्तु संसेव्य दरिद्रं यो विमुञ्चति। स नृशंसतमो लोके नरो नरकभाजनम् (७)॥ न त्यजेत नरो भृत्यं स्वगेहे गतयौवनम्। असमर्थं तु वार्धक्ये त्यक्त्वा नरकमाप्नुयात् (८)॥ कृतज्ञः पुरुषो लोके कृतज्ञः सर्वभाक्तथा। कृतज्ञः सर्वमाप्नोति यत् किञ्चिन्मनसेच्छति (१४)॥ छायायां यस्य विश्रान्तो नरः पादपस्य तु। तस्मात्पत्रं न हिंसेत कृतज्ञत्वमनुस्मरन् (१८)॥ यो ब्रह्मलोकस्तपसा न शक्यः प्राप्तुं द्विजेन्द्रा महतः सुकृच्छ्रात्। तं ब्रह्मलोकं हि नरः कृतज्ञः प्राप्नोति शीघ्रं नहि संशयोऽत्र (२२)॥

## वृक्षरोपणे पुण्यम्

एकोपि रोपितो वृक्षः पुत्रकार्यकरो भवेत्। देवान्प्रसूनैः प्रीणाति छायया चातिथींस्तथा (३।२९७।१३)॥ फलैं र्मनुष्यान्प्रीणाति नारक्यं नास्ति पादपे। अपि पुष्पफलैर्हीने द्रुमे पान्थस्य विश्रमः (१४)॥ छायायां स्तोककालेन वहु पुण्यं प्रयच्छति देवे। वर्षति यद् वृक्षात्पत्रेभ्यः स्रवते जलम् (१५)॥ तेन तृप्तिमवाप्नोति परलोकगतो ध्रुवम्। तेन नाकमवाप्नोति

वृक्षरोपयिता नरः (१६) ।। सेचनादपि वृक्षस्य रोपितस्य परेण तु । महत्फलमवाप्नोति नात्र कार्या विचारणा (१७) ।। शास्त्रं जलाशयो वृक्षः सुरवेश्म तथैव च । मृतस्यापि मनुष्यस्य शरीरमिह कीर्तितम् (२६) ।।

## पान्थपरिचर्या

वीजयित्वा परिश्रान्तं तालवृन्तेन मानवः । स्कन्धेन श्रान्तमूढ्वापि वाजपेयफलं लभेत् (३।२९८।१८) ।। वाहनेनाथ यानेन स्वेन श्रान्तं तथा नयत् । साध्यानां लोकमासाद्य देवभोगानुपाश्नुते (१६) ।। श्रान्तस्य भोजनं दत्त्वा कामानाप्नोति शाश्वतान् (२०) । उपानहाभ्यां छत्रेण श्रान्तं संयोज्य मानवः । स्वाम्यां विषमदेशेषु क्षणाद् बहुफलं लभेत् (२१) ।। भारश्रान्तात्तथा भारं गृहीत्वा वहते च यः । कर्मणा तेन विप्रेन्द्राः स्वर्गलोकमुपाश्नुते (२२) ।। पान्थानां हि दया कार्या कर्मणा येन केन चित् (२८) । कूपास्थानं परं पान्थः स्वगृहाद् यो विनिःसृतः । लिङ्गी चाप्यथवा वर्णी, पान्थं प्रति विचक्षणैः । उपेक्षा नैव कर्तव्या पान्थाः पूज्यास्तु सर्वशः (२६)।।

## अभयदानम्

अभयस्य प्रदानाद्धि नान्यद् दानं विशिष्यते । सर्वेषामेव दानानां प्राणदानं विशिष्यते (३।३०२।२) ।। अभयस्य प्रदानेन नरः स्यात्सर्वकामदः । अश्वमेधफलं तस्य यो रक्षेच्छरणागतम् (६) ।। परित्राणं तु यः कुर्याद्भीतस्य शरणैषिणः । स एकः पुरुषो लोके सर्वधर्मभृतां वरः (१०)।। नरः कृतपरित्राणः पुण्यं किञ्चिद्यदाचरेत् । भागी तस्य परित्राता नरः पुण्यस्य कर्मणः (२२) ।। चोरग्रस्तं नृपग्रस्तं रिपुग्रस्तं तु मोक्षयेत् । व्यालग्रस्तं तथा विप्राः सोऽश्वमेधफलं लभेत् (२८) ।। व्याधितस्यौषधं दत्त्वा प्राणदानफलं लभेत् (२६) ।

## स्त्रीधर्मः

स्त्रीधर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः । सधर्मचारिणी भर्तुर्भवेदग्निसमीपतः (३।३२२।२) ।। पुत्रवक्त्रमिवाभीक्ष्णं भर्तुर्वदनमीक्षती । या साध्वी नियताचारा सा भवेद् धर्मचारिणी (४) ।। देववत् सततं साध्वी भर्तारमनुपश्यति । शुश्रूषां परिचर्यां च देवतुल्यं प्रकुर्वती (६) ।। वश्या भावेन सुमनाः सुव्रता सुसमाहिता । अनन्यचित्ता सुमना भर्तुः सा धर्मभागिनी (७) ।। पारुष्यमपि वोक्ता या दृष्टा वा क्रूरचक्षुषा । सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता (८)।। न चन्द्रसूर्यौ तद्रूपं नैनौ या च निरीक्षते । भर्तृवर्जं वरारोहा सा भवेद् धर्मभागिनी (९)।। न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा । स्पृहा यस्या यथा भर्तुः सा नारी धर्मभागिनी (१३) ।।

## एकादशविधाः साक्षिणः

एकादशविधः साक्षी शास्त्रदृष्टो मनीषिभिः । कृतः पञ्चविधस्तत्र

षड्विधोऽकृत उच्यते (३।३२७।१) ।। लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च । गूढश्चोत्तरसाक्षी च कृतः पञ्चविधः स्मृतः (२) ।। ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् । कार्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितः सदा (३)।। कुलं कुलविवादेषु षड्विधस्त्वकृतः स्मृतः । द्वयोर्विवदतो-रर्थे द्वयोः सत्सु च साक्षिषु (४) ।। पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः (५) ।

## केशवतार्क्ष्ययोः संवादः

अस्ति सुमुखो नाम नागः । केशवस्तस्मै गरुत्मतोऽभयं ददाति । तेन रोषं गतो गरुत्मान् केशवाय सोपालम्भं निवेदयति । ततस्तयोः प्रवर्तते संवादः । स च गरुत्मतो दर्पस्य विनायक इतीतरेषामपि दृप्तानां विनयनायालं भवेदिति कविवचोभिरविकलमुदाह्रियते—

किमवज्ञाय मां कृष्ण सुमुखे दीयते वरः । मम पृष्ठगतः शत्रूंस्त्वं निहंसि च बुध्यसे । कुटुम्बाभरणं शत्रुं पन्नगं मम रक्षसि (३।३४३।८) ।। एवमुक्तस्तदा तेन विष्णुर्गरुडमब्रवीत् (९) । न मे शक्तं जगद् वोढुं सकलं विहगेश्वर । अहमेवात्मनात्मानं धारयामि रणे रणे (१०) ।। शक्तिश्चेदस्ति वोढुं ते भुजमेकं वहस्व मे । एवमुक्त्वा ददौ पृष्ठे तस्य सव्यं भुजं हरिः (११)।। ततो विषण्णवदनः पक्षत्यागात् खगोत्तमः । बलात्तो द्रीतश्च तुष्टाव देवेशं मधुसूदनम् (१२) ।। नमस्ते देवदेवेश सुरासुरनमस्कृत । अजेय पुण्डरीकाक्ष शरणागतवत्सल (१३) ।। न मया त्वद्बलं ज्ञातमात्मसम्भावितात्मना । त्वमेव देव त्रैलोक्यं सदा धारयसेऽनघ (१४) ।। आत्मानमात्मना देव त्वमेव वहसे सदा । यस्य ते देव सकलं देहे त्रिभुवनं स्थितम् (१५) ।। तस्य वोढुं कथं शक्ता मद्विधा हि सहस्रशः (१६) । श्री भगवानुवाच—आत्मसम्भावना तार्क्ष्य न कार्या ते कदाचन । अहमेवात्मनाऽऽत्मानं वहामि त्वां च धारये (२१) ।।

## गरुडस्तोत्रम्

इह पुराणे तृतीयस्मिन्खण्डे वसुकृतं यद् गरुडस्तोत्रं स्थितं सा रञ्जनमात्रप्रयोजना देवाराधनलक्षणा यथाकथञ्चिद् गुम्फितस्तुतिपदा वन्दनैव न भवति किन्तर्हि चित्रविचित्रतच्चारित्रांशोपनिबन्धनी तन्महि-मोद्घाटनी चेतोहारिणी सुभगविरुदावलिरिति शब्दार्थौचित्यसंवेदन-समुत्सुकेभ्यो विदग्धेभ्यः कामं रोचिष्यतेतरामिति समस्य विन्यस्यते—

नमस्यामि महाबाहुं खगेन्द्रं हरिवाहनम् । विष्णोर्ध्वजाग्रसंस्थान वित्रासि-तमहासुर (३।३४६।१०)।। नमस्ते नागदर्पघ्न विनतानन्दवर्धन । स्वपक्षवा-तनिर्धूतदीनदैत्यनिरीक्षित(११) ।। परस्परस्य शापेन सुप्रतीकविभावसू । गजकच्छपतां प्राप्तौ तावुभौ वैरसंयुतौ (१२) ।। षड् उच्छ्रितो योजनानि गजस्तद्द्विगुणायतः । कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः (१३) ।। नखस्थौ तौ त्वया नीतौ हतौ भुक्तौ च पक्षिप । परस्परकृतोच्छ्रायौ

द्वारौ(?) च परिमोक्षितौ (१४) ।। निषादविषयं भुक्तं तत्र क्रूरमनिन्दितम् । निषादीशस्ततो मुक्तस्तत्रापि ब्राह्मणस्त्वया (१५) ।। त्वया रोहिणवृक्षस्य योजनानां शतायताः । शाखा भिन्नाः स्थिता यत्र वालखिल्याः सहस्रशः (१६) ।। तांस्तु वक्त्रगतान्कृत्वा नखस्थैर्गजकच्छपैः । नभस्येव निरालम्बे सर्वतः परिवारितः (?) (१७) ।। त्वया जित्वा रणे सर्वान्देवाञ्शक्रपुरोगमान् । आहृतं तु परं सोमं वह्नेर्वाप्यथ काश्यप (१८) ।। नागौ दृष्टिविषौ कृत्वा रजसा भुवि चक्षुषोः । जिह्वाग्रनित्यगं भुञ्जञ्चक्रे तौ देवनिर्मितौ (१९)।। आहृत्यापि त्वया सोमं नोत्तमेव न भक्षितम् । तेन विष्णोर्ध्वजस्थाने वाहनत्वं गतो ह्यसि (२०)।। यत्र जिह्वा द्विधाभूता पन्नगानां द्विजोत्तमाः । विनता मोचिता दास्यात् कद्र्वा पूर्वंजिता पणे (२२)।। उच्चैः श्रवास्तु किंवर्णः शुक्लं इत्येव भाषती । कृष्णवालमहं मन्ये पुच्छं दृष्ट्वैव वाक्छलात् (२३) ।। तेजसा भास्करं देवं जवेन च समीरणम् । न ते तुल्यो महाभाग नागपक्षक्षयङ्कर (२६) ।।

## अपाणिनीयाः प्रयोगाः

यथाऽन्यत्र पुराणेष्वपभ्रंशा बाहुलकेनोपलभ्यन्ते तथात्रापीति नातिचित्रम् । तथापि केचनासह्या अरुन्तुदा अपप्रयोगा इह लक्ष्यन्ते । त इहानुक्रम्यन्ते—कथं धारयिता चासि मया हीनास्त्विमाः प्रजाः (१।१०९।२५) । चकारेण सिपोऽव्यवधिरपाणिनीयः । अन्यत्रापि सञ्छादयास्तदा चक्रुः सर्वे प्रहरणोत्करैः (१।२१७।२७) इत्यत्र करोतेरनुप्रयोगस्तदेत्यनेन व्यवहितः । तन्नाभ्यनुजानाति पाणिनिः । युधाजिति परीदाय क्षिप्रमागन्तुमर्हसि (१।२०४।११) । परीदायेत्यपशब्दः परिदायेत्येव शब्दः । दीर्घस्याविधेः । तमन्वयौ चतुरङ्गबलम् । पताकाध्वजसम्बाधं कल्पयन्तं वसुन्धराम् (१।२०४।३२) । कल्पयद् इति प्राप्ते । सर्वनामस्थानाभावान्नुमोऽप्राप्तेः । यथाशक्ति शरव्रातान्वारयन्तोऽपि देवताः । राक्षसेन्द्रशरैर्भिन्नाः केशवं शरणं ययुः (१।२१७।२३) ।। देवता इत्यनेन सामानाधिकरण्ये वारयन्त्य इति सुप्रयुक्तं स्यात् । देवतेति नियतं स्त्रियाम् । कामं ह्निन्द्यां पुंसि प्रयते प्रयोगः । ऋक्षस्य वानरेन्द्रस्य दुहितां मानसीं स्वयम्(१।२५२।८) । दुहितेति टाबन्ता शब्दाकृतिर्नास्ति । शरीरैर्यत्र संरुद्धाः स्रवन्तो रुधिरापगाः (१।२५३।२८) । स्रवन्त्य इति पाणिनीया इच्छन्ति । निधिस्तत् पारलौकिकिकम् (२।३२।२) । निधिः पुमान् । क्यन्ताः पुंसि । इषुधिः स्त्री च, ओषधिः स्त्रियाम् इत्यपवादः । पुत्राणामपि तत् पुत्रं साध्वो यस्यारणिर्भवेत् (२।३३।१३) । अहो अत्याहितम् । पुत्रशब्दो नपुंसकम् ! असतामुपघाताय राजानः कृतवान् स्वयम् (२।३८।६) । अत्र ब्रह्मा कर्ता । अनुक्ते कर्मणि द्वितीयायां राज्ञ इति प्रयोगमर्हति । वातपित्तकफोत्थानि सर्वरोगाणि देहिनाम् (२।५६।२४) । रोग इत्यत्र कर्तरि घञ् । अयं पुंसि नियतः । नपुंसकत्वं त्विहैव । अस्थन्वतां तु सत्त्वानां सहस्रस्य प्रमाणे (२।३२।१३४) । अस्थिमतम् इति प्राप्ते । अनङ आदेशस्याप्राप्तेः ।

आसाद्य घोराणि हि सङ्कराणि (२।८१।१४)। अप्प्रत्ययान्तः सङ्करः पुमान् इत्याबालं प्रसिद्धः कथङ्कारमस्य पुराणकारस्याप्रसिद्धः ? भूमिभित्त्वौषधीश्छित्त्वा हत्वा कीटपिपीलिकम्। पुनन्ति खलु यज्ञेन कर्षिका नात्र संशयः (२।८२।३०)॥ क्रैयादिकः पूञ् पवन इति धातुः सकर्मकः, प्रोङ् प्रीतौ दैवादिकस्त्वकर्मक इति पारायणिका व्यवहारकोविदाश्च। दिवा धाना स्वरं हन्ति (२।६३।१५)। धाना भृष्टयवे स्त्रिय इत्यमरवचनाद् धाना भूम्नि। तेन घ्नन्तीति निरवद्यं स्यात्। आमश्राद्धास्तथा दत्ता भुज्यन्ते तत्र मानवैः (२।११३।१५)। श्राद्धमिति प्रीत्या पितृभ्यो दीयमानमन्नमुच्यते। तच्च नित्यं नपुंसकम्। श्राद्धमनेन भुक्तमिनिठनौ (५।२।८५) इत्यत्र सूत्रकारोपि नपुंसकत्वमास्थत्। मनोरथानि कुरुते सुकृतार्थं पुनः पुनः (२।११४।१५)। मनसो रथ इति विग्रहः। रथः पुमान् इति कः संशेतेऽन्यत्रास्मात्पुराणकारात्। परवल्लिङ्गत्वान्मनोरथ इत्येव युक्तमुक्तं स्यात्। एकत्रितानि तत्त्वानि पुरुषस्य (२।११५।४४)। एकत्रितम् इत्यपभ्रंशो भयावहः। सम्पद्यतेः कर्तरि च्विर्विहितः। एकत्रेत्यत्र त्वधिकरणविभक्तिस्त्रल्। कुतस्तत्र च्वेः प्रसङ्गः। अहो असमीक्ष्यकारिता। अधुनातनास्तु दुर्गृहीतशास्त्रार्था असकृदेवमपचरन्तो दृष्टाः। पुराणकारे तु नैतत्सम्भाव्यमासीत्। अणिमां लघिमां प्राप्ति महिमां च भृगूत्तम (२।१२६-१२)। अणिमादय इमनिजन्ताः। इमनिजन्तं च शब्दरूपं पुंसि नित्यम्। यद्विपन्नं तु दृश्येत तत्साध्यं साधनैरिमैः (२।५।१४)। इमैरित्यपलक्षणम्।

मन्येऽन्यत्रमना कविरेवं प्रायुङ्क्त। स तु वर्षवरो ज्ञेयस्तदध्यक्षस्तु कञ्चुकिः (३।१७।४८)। मत्वर्थीयेन इनिना कञ्चुकीत्येव शब्द इति शैक्षस्यापि विदितम्। वेदशास्त्राः समायान्तु (३।१०३।५६)। शास्त्रमित्यौणादिकं क्लीवम्। चीर्त्वा द्वादश वर्षाणि दीक्षामेतां मनोगताम् (३।२३७।-६३)। चरित्वेति तु पाणिनीयाः। मनःशुद्धिविहीनस्य सर्वे शौचा निरर्थकाः (३।२७५।११)। शौचमिति भाव इगन्तादणि रूपम्। गौरवं लाघवं मार्दवम् इत्यादिवच्छौचमपि नित्यं क्लीबम्। सर्वदेवमया गावः सर्वतीर्थमयास्तथा (३।२६१।२५)। मयटि टित्त्वान्ङीपि सर्वदेवमय्यः, सर्वतीर्थमय्य इत्येव साधुनी रूपे। उपानहाभ्यां छत्रेण श्रान्तं संयोज्य मानवः (३।२६८।२१)। उपानह इत्यदन्ता प्रकृति र्नास्ति। मातृष्वसां स्वसां चैव तथैव च पितृष्वसाम् (३।३०८।८)। मातृष्वसारमित्याद्येन साधु। प्राकृतभाषाप्रभाव एष यट्टावन्ततामेषां कल्पयते कविः। आय-द्वारांश्च नोच्छिन्द्यात् (३।३२३।३५)। द्वारशब्दस्य पुंस्त्वमतिङ्करं भवति।

## छन्दोवशाच्छब्दवैरूप्यम्

अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेदित्यत्र प्रत्ययितः पुराणकारः क्वचिदक्षरं लुम्पति, क्वचिद् दीर्घं ह्रसयति, क्वचिदनर्थकेनोपजनेन शब्दरूपं विकरोति, क्वचिद्ध्रस्वं द्राघयति। तदिह संग्रहेण निदर्शयामः। पुत्रं कनीयसं रामं जनयामास रेणुका (१।३५।२१)। कनीयांसम्

इति प्राप्ते, ह्रस्वस्याप्राप्तेः। ह्रस्वत्वं वृत्तभङ्गभयादाश्रितम्। जरायुजाण्डजाश्चैव संस्वेदजमथोद्भिजम् (१।५६।१०)। उद्भिज्जमिति प्राप्ते, जकारं लुम्पति। तमन्वयौ महाभाग चतुरङ्गमहाबलम्। पताकाध्वजसम्बाधं कल्पयन्तं वसुन्धराम् (१।२०४।३२)॥ अन्यत्रापि—अन्वयौ पुण्डरीकाक्षं शरणागतवत्सलम् (१।२१६।७)। अत्र अनुययाविति प्राप्तेऽकारमुपजनयति यकारं च लोपयति। तथैवानुययौ देवं प्रभामण्डलदुर्दृशः (१।२१५।२१)। खलि गुणे दुर्दर्श इत्येवं शुद्धे रूपे छन्दो भ्रश्यति। स्थलयः कृष्ण सारङ्गनेत्रैरनिमिषैरिव (१।२४३।१२)। स्थल्य इत्येव साधु। कृत्वा संशोधनं तत्र विरागः समपद्यते (२।३१।२५)। अत्र च्छन्दोरिरक्षिषयाऽनर्थकं शब्दरूपमाश्रयते न चेक्षतेऽदन्तः सम इत्युपसर्गो नास्तीति। यथा धर्मात् फलं शीघ्रं नाप्नुवन्ति दुरात्मनः (२।६१।१६)। उपधादीर्घेच्छन्दो भङ्क्ष्यत इति भिया दीर्घं परिहरति, दुरात्मान इति शुद्धं रूपं चोज्झति। एवं स्नातः परीधाय सुशुद्धे वाससी शुभे (२।८३।२०)। परीधायेत्याप्राप्तं दीर्घं करोति वृत्तभङ्गभीतः। मान्यमानस्तथा भामो भर्तृदारः कुमारकः (३।१७।४५)। भर्तृदारक इत्येव प्रसिध्यति। अस्थाने ककारविलोपः। कुमारक इति सुत्यजम्। तदन्तरा तदर्थगतेः।

## सुभाषितावलिः

मितं च सारं च वचो हि वाग्मिता। तन्निदर्शनानि कविप्रतिभोत्थानि सन्तीह पुराणे विप्रकीर्णान्यविरलानि हृदय-संवननानि वाक्यानि। तानि विचार्य विचार्यमिहैकस्थीकृत्य समर्प्यन्ते रसिकजनास्वादाय कामिताय च बुद्ध्युपचयाय।

नास्ति सत्यात् परो धर्मो नास्ति कृष्णसमा गतिः। गायत्र्याश्च परं नास्ति दिवि चेह च पावनम् (१।१६५।३२-३३)॥ या लक्ष्मीनुरलिप्ताङ्गी वैरिशोणितकुङ्कुमैः। कान्तापि सरसा प्रीतिं न सा धत्ते मनस्विनाम् (१।२११।४)॥ अजितारिगणोपात्तसम्पदो भूषणक्रिया। विपद् गरीयसी ताभ्यो या न सम्पद्विभूषणा (६)॥ शोभन्ते कर्कशाः शूराः स्तना इव समुन्नताः। शूराणां च स्तनानां च परावज्ञाकरी रतिः (७)॥ तेजस्विनामभ्युदयो वन्दनीयो जगत्त्रये। यथा भास्करमुद्यन्तं जनः सर्वोऽभिनन्दति (८)॥ सत्त्वाधिकस्य सिंहस्य लीलोन्मथितपादपाः। न शक्ताः पुरतः स्थातुं शैलकूटोपमा गजाः (६)॥ लक्ष्मीसङ्गलुब्धानां शूराणां च रणोद्भवा। कीर्तिर्भवति सैवाशु संयोगकरणा सखी (१२)॥ पितृतुल्यश्च साधूनां ज्येष्ठभ्राता गुरुर्मतः (१।२१६।८)। नावज्ञा कस्यचित्कार्याऽबलो वा बहुमन्यते। नित्यं लोके हि दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः (१।२१८।१४)॥ यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते। न कञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः (१५)॥ कः कुर्याद् दुर्बले क्रोधं स्वभावादेव निर्जिते। बलवत्यपि कः क्रोधं कुर्यात्प्राणहरं नरः (१८)॥ कष्टं कन्यापितृत्वं नराणां मानकाङ्क्षिणाम् (१।२२०।५)। न ह्यर्थास्तत्र

तिष्ठन्ति मित्राणि न बान्धवाः। सुप्रीतो भृत्यवर्गस्तु यत्र तिष्ठति राघव ।१।२४२।२३) ।। अरे र्वा प्रणिपातस्य सङ्ग्रामे मरणस्य च। यदन्तरं तद्भवति ब्रह्महत्याश्वमेधयोः (१।२५४।६) ।। यत्राकृतिस्तत्र गुणा वसन्ति (२।६।१६)। शस्त्रमग्निर्विषं सर्पा निर्स्त्रिशमपि चैकतः। भृत्या मनुजशार्दूल कुभृत्याश्च तथैकतः (२।२४।६१-६२) ।। न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते। विषमेकाकिनं हन्ति ब्रह्मस्वं सप्तपूरुषम् (२।३२।५) ।। रामास्तु भृगुशार्दूल न प्रदुष्यन्ति कर्हि चित्। मासि मासि रजस्तासां दुष्कृतान्यपकर्षति (२।३३।१६) ।। सोमस्तासां ददौ शौचं गन्धर्वः शिक्षितां गिरम्। अग्निश्च सर्वमेध्यत्वं तस्मान्निष्कलमषाः स्त्रियः (१७) ।। एतदेव परमं राम रामाणां धर्मकारणम्। यदासां सर्वकार्येषु नित्यं हि परतन्त्रता (२।३४।२)। कुतः क्लमः कुतो दुःखं सद्भिः सह समागमे (२।३८।१)। साधूनामप्यसाधूनां सन्त एव परा गतिः (२)। विषाग्निसर्पशस्त्रेभ्यो न तथा जायते भयम्। अकारणजगद्वैरिखलेभ्यो जायते यथा (३) ।। धर्महीनस्य कामार्थौ वन्ध्यासुतसमावुभौ (४) कोहि जानाति कस्याद्य मृत्युः केन भविष्यति (२।३९।२५)। पश्यतो प्यस्य लोकस्य मरणं पुरतः स्थितम्। अमरस्येव चरितमत्याश्चर्यं सुरोत्तम (२६) ।। न भयं मरणादेव प्राणिनामधिकं क्वचित्। तत्रापि निर्भयाः सन्तः सदा सुकृतकारिणः (२९) ।। तत्सैन्यं कुञ्जरा यत्र स नृपो यस्य कुञ्जराः। मूर्त्तिमान् विजयो राम कुञ्जराः मदगर्विताः (२।४८।११) ।। यथा हि मलिनवस्त्रैर्यत्र तत्रोपविश्यते। तथा चलितवृत्तस्तु वृत्तशेषं न रक्षति (२।१५।५) ।। अनाहार्यप्रभस्यापि त्रैलोक्योद्भासितात्मनः। कृष्णता राहुसंसर्गात् किं न सूर्यस्य वा भवेत् (७) ।। न पण्डितो मतो राम बहुपुस्तकधारणात्। परलोकाद् भयं यस्य तमाहुः पण्डितं बुधाः (१३) ।। अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम्। रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् (१४) ।। अतिभोजनतो राम तथा चाभोजनेन च। सर्वेपि रोगा जायन्ते वेगोदीरणधारणैः (२।५६।११२)।। सर्वामयार्तिप्रशमार्थमेकां त्वमोषधीं राम निबोध गुह्याम्। भक्तिः प्रभोर्देववरस्य विष्णोर्या सर्वकामैः पुरुषं युनक्ति (२।५६।१३०) ।। नित्यं राज्ञा तथा भाव्यं गर्भिणीसहधर्मिणा। यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत् (गर्भिणी)(२।६१।१२२)।। ऊरुस्तम्भत्रयं प्रोक्तं शरीरेषु शरीरिणाम् (२।६२।१३)। आहारो मैथुनं निद्रा यै वृतं सकलं जगत्। असेवनादथैतस्य तथैवात्यन्तसेवनात् (१४) ।। रोगग्रामो नृणां देहे सम्भवत्यतिदारुणः (१५)। आत्मसंभावना स्त्रीषु न कर्त्तव्या कथञ्चन (२।६२।३५)। संहिता हि विना भेदं शक्रेणापि सुदुःसहाः (२।६८।४)। नाज्ञातिरनुगृह्णाति नाज्ञातिः स्नेहमिच्छति (२।६८।१४)। काणं वाप्यथवा खञ्जमन्धं वापि तथाविधम्। तथ्येनापि ब्रुवन्दाप्यो दण्डः कार्षापणावरः (२।७२।६३) ।। अकामतः कृते पापे प्रायश्चित्तं विदु र्बुधाः (२।७३।२)। यथाश्वमेधः सुतरां सर्वपापापनोदनः। तथाघमर्षणं सूक्तं सर्वपापापनोदनम् (२।७४।१६) ।। परस्मात्त्रायते यस्मात्तस्मात्पात्रं प्रकीर्तितम् (२।७६।२२)। ऋतेन जीवेद-

नृतेन जीवेन्मितेन जीवेत्प्रमितेन जीवेत् । सत्यानृताभ्यामथवापि जीवेच्छ्रू वृत्तिमेकां परिवर्जयेत्तु (२।८२।३४) ।। वरस्य भूमिपालस्य स्नातकस्याथ चक्रिणः । भाराक्रान्तस्य गुर्विण्याः पन्था देयः प्रयत्नतः (२।८९।११-१२) ।। न पश्येच्चार्कमुद्यन्तं नास्तं यान्तं न चाम्भसि । तिरस्कृतं तु वस्त्रेण न क्रुद्धस्य गुरोर्मुखम् (२।८९।१३) ।। न स्त्रीं स्रवन्तीं नोदक्यां न नग्नां नान्यसङ्गताम् । न पत्नीं भोजनस्वप्नस्नानासक्तां विभूषणाम्(१४) ।। आत्माभिष्टवनं निन्दां परस्य च विवर्जयेत् (२।८९।८७) । एको मिष्टमश्नाति न ततोऽन्योस्ति पातकी (।२९३।१०)। मनः संशयकृन्नित्यं तथा बुद्धिर्विवेचनी (२।११५।४१)। पवित्राणां पवित्रं तु पावमानऋचः स्मृताः (२।१३४।१०९) । सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते । दर्शनेन विहीनस्तु संसारं प्रतिपद्यते (२।१३१।४१) ।। नावमन्येत धर्मज्ञ त्रीणि तेजांसि पण्डितः । अग्निं च कुलपुत्रं च ब्राह्मणं च द्विजोत्तमाः (३।२३३।३९।)।। त्रीन् कृशान्नावजानीयाद् दीर्घमायुर्जिजीविषुः । ब्राह्मणं क्षत्रियं सर्वं सर्वे ह्याशीविषास्त्रयः (४०) ।। दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः । याऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् (७७) ।। वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद् यदुत्तरम् (८२) ।। न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् (८३) ।। शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः । सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् (१२२) । नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः । आ मृत्योः श्रियमन्विच्छेन्न तां मन्येत दुर्लभाम् (१७६) ।। सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः (१७७) ।। यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रापवादेन दानं च परिकीर्तनात् (२०५-२०६) ।। प्रश्रयेण जयेन्मानं दैन्यं दृष्टान्तसंश्रयात् । अक्रोधेन जयेत्क्रोधं विनयेन त्वनार्यताम् (२५९) ।। न मृदुः स्यान्न च क्रूरो ह्युभावेव समाश्रयेत् । मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः (२६९) ।। कृच्छ्रेष्वपि न तत् कुर्यात्साधूनां यदसम्मतम् । जीर्णाशी च मिताशी च हिताशी च तथा भवेत् (२६६) ।। जनानुरागप्रभवा हि सम्पदः (२८१) । नैनत् कुर्यां पुनरिति निवृत्त्या पूयते तु सः (३।२६६।१२)। अचोद्यमानानि यथा पुष्पाणि च फलानि च । स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् (३२।३७।७६) ।। सम्पद्विनाशे न च दुःखमीयात् । यद्भावि तद्भावि न तस्य नाशः (३।२४२।७) । लुब्धस्य बन्धुर्न सुतो गुरुर्वा लुब्धस्य लोको न च लोकयात्रा (३।२४५।७) । क्रोधेन विजितो यस्तु कथमन्यं स जेष्यति । क्रोधे जिते जितं विद्धि त्रैलोक्यं सचराचरम् (३।२४६।५) ।। सर्वेषामेव पापानां नास्तिक्यं पातकं परम् (३।२४७।१) । मरणे सन्निकृष्टेपि मरणस्य विचक्षणः । हेतुभूतानि कर्माणि निन्दितानि निषेवते (५-६) । दत्तमाचारहीनेन न प्रतीच्छन्ति देवताः (३।२५०।३) आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः (५) । अनृताद्धि परं नास्ति द्वारं नाशनमात्मनः (३।२५१।१) । न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु विप्रा न विवाहकाले ।

प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि (३०) ॥ अपि कीटः पतङ्गो वा न हन्तव्यः कदाचन (३।२५२।२)। गुरुं वा बालवृद्धौ वा मान्यं वाप्यथवा जनम्। आततायिनमायान्तं हन्यादेवाविचारयन् (३।२५२।५) ॥ ताडिता (=ताडयिता) ताड्यते लोके बद्धा (बन्द्धा) वै बध्यते तथा। हन्ता वधमवाप्नोति नात्र कार्या विचारणा (३।५३।४१) ॥ एकस्मिन्नप्यतिक्रान्ते दिने धर्मत्रिवर्जिते। दस्युभिर्मुषितस्येव युक्तमाक्रन्दितं चिरम् (३।२५४।४-५)। स्वर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् (३।२५६।२) ॥ अदैवं दैवतं कुर्याद् दैवतं चाप्यदैवतम्। कुर्याल्लोकांस्तथैवान्यान् ब्रह्मचर्येण मानवः (३।२५८।३) ॥ कीर्तिः शरीरं निर्दिष्टा मृतस्यापि शरीरिणः (३।२६१।१)। यशः शोभा मनुष्यस्य परमं तस्य मण्डनम्। यशसा वर्जितस्येह मण्डनं लाञ्छनं परम् (६) ॥ यज्ञेन देवा जीवन्ति यज्ञेन पितरस्तथा। देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः (३।२६२।६) ॥ पारणं सर्ववेदानां सर्वतीर्थावगाहनम्। सत्यं च वदतो लोके समं स्यातां न वा समम् (३।२६५।६) ॥ अश्वमेधसहस्रं तु सत्यं च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते (७) ॥ असृग्यदाऽस्य गात्रेभ्यो विनिर्याति रणाजिरे। तेनैव सार्धं निर्याति पापं तस्य शरीरतः (३।२६७।१५) ॥ शक्यं त्विह समृद्धैर्यष्टुं क्रतुशतैर्नरैः। आत्मदेहं तु सङ्ग्रामे त्यक्तुं विप्राः सुदुष्करम् (३४-३५) ॥ मासि मास्यश्वमेधेन यो यजेत शतं समाः। मांसानि च न खादेद्यः सम वा स्यान्न वा समम् (३।२६८।६) ॥ दुष्करं हि रसज्ञेन मांसस्य परिवर्जनम् (९)। एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते। यदेनं क्षमया युक्तमशक्तं मन्यते जनः (३।२६९।४) ॥ मनःशुद्धिविहीनस्य सर्वे शौचा निरर्थकाः (सर्वं शौचं निरर्थकम्) (३।२७५।११)। आत्मा नदी पुण्यतटा सुतीर्था सत्योदका धृतिकूला दयोर्मिः। यस्यां स्नातः पूयते पुण्यकर्मा तीर्थं ह्यात्मा नित्यसंभोग एव (१४) ॥ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः (३।२७६।२)। यावन्न चेत आयाति वैराग्यं परमं नरः। तावन्न शक्तो भवति प्रत्याहारस्य वै द्विजाः (३।२८१।७) ॥ समाधिस्थश्च दुःखेन गुरुणापि न चाल्यते। शङ्खानि शतशस्त्वस्य वाद्यन्ते यदि कर्णयोः। भेर्यश्च यदि हन्यन्ते शब्दं बाह्यं न विन्दति (३।२८४।४-५) ॥ व्यवसायद्वितीयानां नास्ति लोके सुदुर्लभम् (३।२८५।२)। व्यवसायविहीनस्तु स्थाणुना नातिरिच्यते (६)। कार्याणि सर्वाणि ततस्तु लोके संकल्पमूलानि वदन्ति सन्तः (३।२८६।६)। गुरुदेवो ब्रह्मचारी नार्यश्च पतिदेवताः। गृहस्थोऽतिथिदैवत्यः (३।२८९।२)। यद् ब्राह्मणास्तुष्टतमा वदन्ति तद् देवताः प्रत्यभिनन्दयन्ति। तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः (३।२९०।९) ॥ यथा देवा यथा वेदा ब्राह्मणश्च यथा द्विजाः। तथा गावो विनिर्दिष्टाः सर्वलोकसुखावहाः (३।२९१।१) ॥ मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम्। सर्वं हि मृदुना हन्ति तस्मात्तीक्ष्णतरो मृदुः (३।२९३।४) ॥ प्रियवाक्यात्परं लोके नास्ति संवननं परमं (३।२९४।५)। प्रियंवदानां सकलं

जगदेतत् स्थितंवशे । प्रियंवदानां शत्रुत्वे नास्ति कश्चिज्जगत्त्रये (३।२६४।६)।

इति सुभाषितावलिरपवृक्ता।

मङ्गल्ये कार्तिके मासे गुरुवारे सिते दले ।
मासिकेनाभियोगेन कृतिमेतामपूपुरम् ।। १ ।।

यथाहमेतया प्रीये सम्प्रेष्यन्ते तथेतरे ।
अलं, विमत्सराः प्राज्ञाः प्रत्ययोऽयं ममान्तरः ।। २ ।।

वचः पुराणगं सारं पथ्यं रुच्यं च नूतनम् ।
पुरस्कृतं प्रयत्नेन ह्यसारं पृष्ठतः कृतम् ।। ३ ।।

नागः प्रकाशको नूनं कर्मण्यत्र प्रयोजकः ।
प्रणेत्रा च मया सार्धं सुकृतांशेन योक्ष्यते ।। ४ ।।

शास्त्रानुशीलने सक्तः कृतीः कुर्यां विवेचनीः ।
सन्ततं, मे वरं देयाद् वरेशः परमेश्वरः ।। ५ ।।

इति श्रीचारुदेवशास्त्रिणः कृतिषु विष्णुधर्मोत्तरपुराणे भूमिका पर्यवसिता ॥



शुभं भूयादध्यापकानामध्यायकानां च । ओं स्वस्ति ।